# Teach Yourself Samskrit

## संस्कृत-स्वाध्यायः

### प्रथमा दीक्षा

# सम्भाषणम्

सम्पादकः
वेम्पटि कुटुम्बशास्त्री

राष्ट्रियसंस्कृतसंस्थानम्
मानितविश्वविद्यालयः
नवदेहली

# सम्भाषणम्

प्रकाशकः - कुलसचिवः
राष्ट्रियसंस्कृतसंस्थानम्
(मानितविश्वविद्यालयः)
56-57, इन्स्टीट्यूशनल् एरिया
जनकपुरी, नवदेहली - 110 058
दूरभाषः 28524993, 28521994, 28524995, 28520977
टेलीफैक्सः 28524532, 28524387, 28520976
E-mail: rsks@nda.vsnl.net.in
rskssale@yahoo.com
website: www.sanskrit.nic.in

| | | | | |
|---|---|---|---|---|
| प्रथमसंस्करणम् | - जनवरी, | २००२ | - १,००० | प्रतयः |
| प्रथमपुनर्मुद्रणम् | - अगस्त्, | २००२ | - ४,००० | प्रतयः |
| द्वितीयपुनर्मुद्रणम् | - अगस्त्, | १००३ | - १,००० | प्रतयः |
| तृतीयपुनर्मुद्रणम् | - नवम्बर, | २००३ | - ३०,००० | प्रतयः |
| चतुर्थपुनर्मुद्रणम् | - दिसम्बर, | २००३ | - २०,००० | प्रतयः |
| पञ्चमपुनर्मुद्रणम् | - मार्च, | २००४ | - ५०,००० | प्रतयः |
| षष्ठपुनर्मुद्रणम् | - दिसम्बर्, | २००७ | - २०,००० | प्रतयः |
| सप्तमपुनर्मुद्रणम् | - जुलै, | २००९ | - ५,००० | प्रतयः |
| अष्टमपुनर्मुद्रणम् | - सितम्बर, | २०१० | - ५,००० | प्रतयः |
| नवमपुनर्मुद्रणम् | - दिसम्बर, | २०११ | - ७,००० | प्रतयः |
| दशमपुनर्मुद्रणम् | - सितम्बर, | २०१२ | - १०,००० | प्रतयः |



ISBN -81-86111-03-4

मूल्यम् - 200/-रूप्यकाणि (गुच्छस्य)

मुद्रकः
ग्राफिक् वर्ल्ड
1659-62 दखणीरायमार्गः,
दरियागञ्ज, देहली - 110 002
E-mail: graphicworld@rediffmail.com

# संस्कृतस्वाध्यायः

## प्रथमा दीक्षा

### मार्गदर्शकसमितिः

प्रो० श्रीधर वसिष्ठः
श्री चमू. कृष्णशास्त्री
श्रीमती शशिप्रभा गोयल
डा० विश्वासः

प्रो० के. वि. रामकृष्णमाचार्यः
डा० चाँद किरण सलूजा
श्री जनार्दन हेगडे
डा० रा. देवनाथन्

### सहसम्पादकाः

ललित कुमार त्रिपाठी
वाई.एस. रमेशः
सुकान्त कुमार सेनापतिः
वनमाली बिश्वालः

### सहयोगिनः

चित्रकारः - कल्लोल मजूमदार
चित्रसज्जाकारौ - ब्रह्म बसेटिया
विजय बसेटिया

सहचित्रकारः - भास्कर सिन्हा
अक्षरसंयोजकः - जवाहर लाल गुप्त

# विषयानुक्रमणी

# शाकापणः

| आवश्यकम् - पर्याप्तम् |
|---|
| मास्तु - स्वीकरोतु |

**आपणिकः** – आगच्छतु! किम् आवश्यकम् ?

**महिला** – एतस्य कूष्माण्डस्य एककिलोपरिमितस्य कति रूप्यकाणि ?

**आपणिकः** – तस्य किलोपरिमितस्य अष्टरूप्यकाणि।

**महिला** – अर्धकिलोपरिमितम् आलुकं ददातु।

**आपणिकः** – कूष्माण्डः मास्तु वा ?

**महिला** – किलोद्वयमितं कूष्माण्डं, एककिलोपरिमितं गृञ्जनकम्, अर्धकिलो महामरीचिकां च ददातु। वृन्ताकम् अपि एककिलोपरिमितम्। विण्डीनकानि नष्टानि खलु? उत्तमानि न आनीतवान् किम्?

**आपणिकः** – उत्तमानि विण्डीनकानि स्यूते एव सन्ति। आवश्यकं किम् ?

**महिला** – किलोमात्रपरिमितं ददातु। आहत्य कतिरूप्यकाणि इति वदतु शीघ्रं गन्तव्यम्।

**आपणिकः** – आहत्य पञ्चसप्ततिरूप्यकाणि। कारवेल्लं मास्तु वा ?

**महिला** – तिक्तम् इत्यतः कारवेल्लं मम गृहे न खादन्ति। पर्याप्तम्। अस्मिन् स्यूते सर्वाणि स्थापयतु। धनं स्वीकरोतु।

**आपणिकः** – परिवर्तः नास्ति किम्? अस्तु स्वीकरोतु।

# संस्कृतकक्ष्या-I

| | | |
|---|---|---|
| एषः | एतौ | एते |
| सः | तौ | ते |
| त्वं | युवां | यूयम् |
| अहम् | आवां | वयम् |

**आचार्यः** – एषः कः ?

**शिष्यः** – एषः कुम्भकारः।

**आचार्यः** – एषः किं करोति ?

**शिष्यः** – सः घटं करोति।

**आचार्यः** – सः कीदृशं घटं करोति?

**शिष्यः** – सः स्थूलं घटं करोति।

**आचार्यः** – सः कया घटं करोति?

**शिष्यः** – सः मृत्तिकया घटं करोति।

**आचार्यः** – एतौ कौ?

**शिष्यः** – एतौ तन्तुवायौ।

**आचार्यः** – एतौ किं कुरुतः?

**शिष्यः** – एतौ वस्त्राणि वयतः।

**आचार्यः** – तौ कीदृशानि वस्त्राणि वयतः?

**शिष्यः** – तौ अमूल्यानि वस्त्राणि वयतः।

**आचार्यः** – तव कानि वस्त्राणि प्रियाणि?

**शिष्यः** – कार्पासीयानि वस्त्राणि मम प्रियाणि। मम मित्रस्य और्णं वस्त्रं प्रियम्।

**आचार्यः** – एते के?

**शिष्यः** – एते चित्रकाराः।

**आचार्यः** – एते किं कुर्वन्ति?

**शिष्यः** – एते सुन्दराणि चित्राणि लिखन्ति।

**आचार्यः** – ते के?

**शिष्यः** – ते हरिणाः।

**आचार्यः** – ते किं कुर्वन्ति?

**शिष्यः** – ते हरितानि तृणानि खादन्ति।

**आचार्यः** – त्वं किं करोषि?

**शिष्यः** – अहं साहित्यं पठामि।

**आचार्यः** – युवां किं कुरुथ?

**शिष्यः** – आवां गीतं गायावः।

**आचार्यः** – यूयम् अद्य पठितान् शब्दान् स्मरत।

**शिष्याः** – तथैव श्रीमन्।

# गृहिण्योः सम्भाषणम्-I

*तृतीया विभक्तिः*

**मालती** – शारदे! किं करोति भवती?

**शारदा** – अहो मालति! आगच्छतु, उपविशतु। कुशलिनी किम्?

**मालती** – आम्, सर्वं कुशलम्। भवती स्वकार्यं करोतु। अहं तत्रैव अन्तः आगच्छामि।

**शारदा** – मम पाकः न समाप्तः। अद्य भोजनार्थं बान्धवाः आगच्छन्ति। अतः विशेषपाकः।

**मालती** – तर्हि किं किं करोति?

**शारदा** – आलुकेन क्वथितं करोमि। कूष्माण्डेन तेमनं करोमि।

**मालती** – बहु मरीचिकाः सन्ति खलु? मरीचिकया किं करोति?

**शारदा** – लघु मरीचिका कटुः, महामरीचिकया भर्जं करोमि।

**मालती** – कैः व्यञ्जनं करोति?

**शारदा** – विण्डीनकैः व्यञ्जनं करोमि। उर्वारुकेण 'किं करोमि' इति चिन्तयामि।

**मालती** – उर्वारुकं गृञ्जनकं च योजयित्वा कोषम्भरीं करोतु भोः। बहु स्वादिष्टं भवति।

**शारदा** – तथैव करोमि। पायसमपि करोमि। पर्पटान् अपि भर्जयामि। मम पतिः बहु इच्छति।

**मालती** – अहमपि किञ्चित् साहाय्यं करोमि।

**शारदा** – मास्तु भो! भवती उपविशतु मया सह सम्भाषणं करोतु। अहं सर्वं करोमि।

**मालती** – तर्हि अहं सर्वेषां रुचिं पश्यामि। सर्वं भवती करोतु।

# गृहिण्योः सम्भाषणम्-II

| आसीत् | - | आसन् |
|---|---|---|
| आसम् | - | आस्म |

शीला – हरिः ओम् गीते! अस्ति किं गृहे ?

गीता – ओः शीले ! किं भोः दर्शनमेव दुर्लभम् ? कुत्र गतवती आसीत् ?

शीला – कुत्रापि न गता अहम्। गृहे एव आसम्। पञ्चदशदिनेभ्यः बहूनि कार्याणि। भवती अपि न आगतवती खलु ?

गीता – अहं, मम भगिनीपरिवारः, मम पुत्री च तिरुपतिं गतवन्तः आस्म। तत्र अस्माकं गृहस्य पूजा आसीत्। तत्र तु जनानां सम्मर्दः एव आसीत्। तत्सर्वं समाप्य ह्यः एव आगताः।

शीला – मम गृहे पुरातनानि कानिचित् भग्नानि नष्टानि च वस्तूनि आसन्। तानि विक्रीय अन्यानि नूतनानि वस्तूनि आनीतवन्तः स्मः तदेव कार्यम्।

गीता – तद्दिने आपणगमनसमये मार्गे भवत्याः पुत्रः मिलितवान् आसीत्। सः उक्तवान् यत् मम जनन्याः गृहे बहूनि कार्याणि इति।

शीला – स्वीकरोतु प्रसादम्। सुशीला अपि नास्ति नगरे इति मन्ये।

गीता – सा तु नगरे एव अस्ति। ह्यः मम गृहम् आगता आसीत्।

शीला – एवम् ! आगच्छतु सा, सम्यक् तर्जयिष्यामि ताम्।

गीता – अहम् आगच्छामि। अद्य मम गृहं प्रति मम माता आगच्छति। सा षट्दिनानि अत्रैव वासं करिष्यति। अतः सप्ताहं यावत् नागच्छामि।

शीला – तिष्ठतु भोः। सर्वदा भवत्याः त्वरा। किञ्चित् तिष्ठतु।

गीता – नैव, भवती अन्यथा मा चिन्तयतु। आगच्छामि पुनः।

शिला – अस्तु, तर्हि पुनर्मिलावः।

# माता-पुत्रयोः सम्भाषणम्-I

*द्वितीया विभक्तिः*
*लोट् म०पु०एक व०*

माता – गोविन्द ! किं करोषि त्वम् ?

गोविन्दः – पाठं पठामि अम्ब !

माता – वत्स ! आपणं गत्वा आगच्छसि किम् ?

गोविन्दः – अम्ब ! शीघ्रं लिखित्वा गच्छामि। किम् आनयामि ततः ?

माता – वत्स ! आपणं गत्वा लवणं, शर्करां, तण्डुलं, गुडं द्विदलञ्च आनय।

गोविन्दः – भगिनीं वदतु अम्ब ! सा किं करोति ?

माता – सा अवकरं क्षिप्त्वा पात्रं प्रक्षालयति। द्रोण्यां जलं पूरयति। भूमिं वस्त्रेण मार्जयति। पुष्पाणि आनीय मालां करोति। एवं तस्याः बहूनि कार्याणि सन्ति भोः।

गोविन्दः – ममापि पठनं बहु अस्ति।

माता – दशनिमेषाभ्यन्तरे आपणं गत्वा आगच्छ। अनन्तरं पाठान् पठ।

गोविन्दः – तर्हि शीघ्रं धनं स्यूतं च ददातु अम्ब !

माता – आगमनसमये द्वौ कूर्चौ, अग्निपेटिके, संमार्जन्यौ च आनय।

गोविन्दः – द्वौ स्यूतौ ददातु, धनम् अधिकं ददातु,चाकलेहान् अपि आनयामि....?

माता – अतः एव भवान् शीघ्रं गन्तुम् उद्युक्तः। स्वीकुरु....।

# मित्राणां गृहागमनम्

*एतत् (पुं)/स्त्री/नपुं*
*एव/किञ्चित्*

**पुत्री** – अम्ब ! मम मित्राणि आगतानि सन्ति, परिचयं कारयामि। आगच्छतु।

**माता** – आगतवती। सर्वेभ्यः नमस्कारः।

**पुत्री** – एषः रमेशः। एतस्य पिता वित्तकोषे कार्यं करोति।

**माता** – अत्र स्नेहा का ?

**पुत्री** – सा नागतवती। तस्याः अम्बायाः अस्वास्थ्यम् अस्ति। एषा दिव्या, अस्माकं गृहसमीपे एव वसति।

**माता** – एतस्याः अम्बाम् अहं जानामि। सा प्रतिदिनं राघवेन्द्रमन्दिरम् आगच्छति।

**पुत्री** – एषः आनन्दः। सर्वान् सदा आनन्दयति। कक्ष्यायाम् अपि सर्वत्र प्रथमं स्थानं प्राप्नोति।

**माता** – तं किरणं जानामि। किरण ! कथं मौनेन स्थितवान् भवान् ?

**किरणः** – मम किञ्चित् शिरोवेदना।

**पुत्री** – एषा मङ्गला, एषा राधा, एषा रोहिणी, एषा कविता, सा ज्योतिः।

**माता** – सः कः भोः, अन्ते उपविष्टवान्।

**पुत्री** – तस्य परिचयं वदामि, कुतः त्वरा ? सः एव अस्माकं मुख्यशिक्षकस्य पुत्रः गोपालः, अस्माकं गणप्रमुखः। तस्य गुणकीर्तनं कर्तुम् एकं दिनं न पर्याप्तम्।

**माता** – अलम् अतिविस्तरेण।

**पुत्री** – अम्ब ! भवती केवलं वचनेन एव मम मित्राणि प्रेषयति उत किमपि खादितुं ददाति ?

**माता** – अस्तु, भवती अस्माकं गृहं दर्शयतु, तावता अहं खाद्यं सज्जीकरिष्यामि।

**पुत्री** – मित्राणि ! एषा मम माता अन्नपूर्णा। साक्षात् अन्नपूर्णेश्वरी। आगच्छन्तु, गृहं सर्वं दर्शयामि।

एषः मम अध्ययनप्रकोष्ठः, एषा पाकशाला, दूरतः एव पश्यन्तु, यतः अन्तः प्रवेशः अनुमतिं विना नास्ति। एतत् प्रार्थनामन्दिरम्। वयं सर्वे प्रातः सायं च मिलित्वा प्रार्थनां कुर्मः। एषः विशालः सभामण्डपः। अत्रैव विशेषदिनेषु कार्यक्रमः भवति। एवम् अस्माकं लघु गृहं, सुव्यवस्थितगृहम्।

आगच्छन्तु उपाहारं स्वीकुर्मः।

# अध्यापकमित्रयोः सम्भाषणम्

| | | |
|---|---|---|
| *एतौ* | - | *एते* |
| *एते* | - | *एताः* |
| *ते* | - | *ताः* |
| *तौ* | - | *ते* |

**प्रमोदः** – नमस्ते श्रीकान्त ! आगच्छतु उपविशतु।

**श्रीकान्तः** – संस्कृतपाठः प्रचलति किम् ? एताः किं कुर्वन्ति ?

**प्रमोदः** – एताः चित्रं दृष्ट्वा प्रश्नान् लिखन्ति। ते अर्धकथां पूर्णां कुर्वन्ति।

**श्रीकान्तः** – एतौ कौ ?

**प्रमोदः** – एतौ मम साहाय्यं कुरुतः। एते बालिके सुन्दरतया लिखतः।

**श्रीकान्तः** – भोः बालकाः, सुन्दरं लिखन्तु। त्वरा मास्तु।

**प्रमोदः** – ते चित्रं दृष्ट्वा सम्भाषणं लिखतः। तौ एकां कथां लिखतः। ताः बालिकाः पदबन्धान् रचयन्ति। एते बालकाः प्रश्नानाम् उत्तराणि लिखन्ति।

**श्रीकान्तः** – अन्ते उपविष्टवन्तौ तौ किं कुरुतः ? युवां किं कुरुथः ?

**छात्रौ** – आवां चित्रे वर्णं योजयावः।

**प्रमोद** – भोः छात्राः ! यूयं शीघ्रं समापयथ। इदानीं क्रीडा अस्ति।

**छात्राः** – वयं शीघ्रं-शीघ्रं लिखामः आचार्य !

# मित्रयोः सम्भाषणम्

*सह-विना*

**शिशिरः** – अखिल ! कोऽपि नास्ति किं गृहे ?

**अखिलः** – अहम् एकः एव अस्मि। पिता अम्बया सह सङ्गीतकार्यक्रमं गतवान्। अग्रजा अरुणया सह चित्रमन्दिरं गतवती। अनुजः बालैः सह क्रीडति।

**शिशिरः** – भवन्तं विना सर्वेऽपि गतवन्तः। भवान् मया सह आगच्छतु। मम माता आपणं गत्वा पुष्पाणि आनयतु इति उक्तवती। अहं स्यूतेन विना एव आगतवान्।

**अखिलः** – चिन्ता मास्तु। अहं स्यूतं ददामि। धनेन विना आगतम् वा इति पश्यतु।

**शिशिरः** – तिष्ठतु। प्रथमं धनमस्ति वा इति पश्यामि। किञ्चित् जलं ददातु भोः।

**अखिलः** – स्वीकरोतु, तिष्ठतु काफीं करोमि। भवान् शर्करया विना काफीं पिबति उत शर्करया सह ?

**शिशिरः** – अहं शर्करया सह एव पिबामि। किन्तु मास्तु, इदानीं भवतः किमर्थं क्लेशः ?

**अखिलः** – क्लेशः नास्ति। ममापि काफीसमयः एषः, तिष्ठतु, मया सह काफीं पिबतु।

# कुटुम्बजना:

**लोट्,–सम्बोधनप्रथमा**

**माता** – राधे ! पुनीत ! शीघ्रम् उत्तिष्ठताम्।

**राधा** – अम्ब ! किमर्थं शीघ्रम् ? अद्य रविवासर: खलु ?

**माता** – शीघ्रं दन्तधावनं कुरुताम्। स्नानमपि समापयताम्। अद्य जनकस्य जन्मदिनम्।

**पुनीत:** – अम्ब ! क: उपाहार: ?

**माता** – अद्य उपाहार: अनन्तरम्। प्रथमं सर्वे देवालयं गच्छाम।

**पुनीत:** – अम्ब उष्णं जलं सज्जीकरोतु। अहं स्नानं करोमि।

**पिता** – नलिनि ! क्षीरार्थं पात्रम् आनयतु। शीघ्रं काफी करोतु।

**माता** – भो ! वार्तापत्रिकाम् अनन्तरं पठतु। शीघ्रं सिद्ध: भवतु।

**राधा** – अम्ब ! महती बुभुक्षा। क्षीरं ददातु।

**माता** – वत्से ! क्षीरं स्वीकुरु। तदनन्तरं नूतनवस्त्रं धर।

**पुनीत:** – अम्ब ! ममापि नूतनवस्त्रं ददातु।

**पिता** – नलिनि ! पूजार्थं सर्वं स्वीकरोतु। गच्छाम वा?

**माता** – पुनीत ! राधे ! द्वौ अपि देवं नमस्कुरुताम्। भो: ! आगच्छतु ! आवां तत्र गच्छाव।

**राधा** – तात ! घण्टा उपरि अस्ति। अहं कथं वादयामि ?

**पुनीत:** – किञ्चित् कूर्दनं कुरु।

**माता** – पुनीत ! त्वं चेष्टां मा कुरु। सा रोदिति।

**पिता** – भो: अर्चक ! एकाम् अर्चनां करोतु।

**माता** – भवान् एव प्रसादं स्वीकरोतु।

**पिता** – पूजा समाप्ता। आगच्छन्तु गच्छाम।

# दूरवाण्या मित्रसम्भाषणम्

वर्तमाने लट्

गिरीशः – हरिः ओम्।

अनन्तः – हरिओम्। कः वदति?

गिरीशः – अहं गिरीशः वदामि। मित्र ! गृहे कोऽपि नास्ति किम् ?

अनन्तः – सर्वे सन्ति। पिता जपति। अम्बा पूजयति। अनुजः खादति। अग्रजा मालां करोति। पितामहः दूरदर्शनं पश्यति। पितामही स्नानं करोति।

गिरीशः – त्वं किं करोषि ? क्रीडसि वा ?

अनन्तः – अहं पठामि। उत्तरं लिखामि। तव अनुजौ किं कुरुतः ?

गिरीशः – मम अनुजौ शालां गच्छतः। अहं पिता च विद्यालयं गच्छावः।

अनन्तः – अद्य त्वमपि विद्यालयं न गच्छ? अहमपि न गच्छामि। वयं सर्वे अद्य मैसूरुनगरं गच्छामः। मम बान्धवाः अपि आगच्छन्ति।

गिरीशः – भवतः पिता कार्यालयं न गच्छति किम् ?

अनन्तः – अद्य मम पिता विरामं स्वीकरोति।

गिरीशः – अनन्तः नहि भोः। अहम् आगन्तुं न शक्नोमि। भवान् गच्छतु।

अनन्तः – पुनः मिलामः, धन्यवादः।

# अधिकारी

*अद्य/ह्यः*
*भूते क्तवतु*

**अधिकारी** – सुधाकर ! शीघ्रं लिपिकारम् आह्वयतु।

**सुधाकरः** – अद्य लिपिकारः नागतवान्। 'सः हरिद्वारं गतवान्' इति।

**अधिकारी** – ह्यः वित्तकोषतः धनम् आनीतवान् किम् ?

**सुधाकरः** – आम्। ह्यः अहं रमेशः च वित्तकोषं गतवन्तौ। धनम् आनीतवन्तौ अपि।

**अधिकारी** – ह्यः सर्वे किं किं कार्यं कृतवन्तः ?

**सुधाकरः** – ह्यः रामगोपालः गणनां समापितवान् 'गीता पत्राणि लिखितवती' गौरीशः कार्याणि परिशीलितवान्। ह्यः चन्नम्मा नागतवती। मुकुन्दः स्वच्छीकृतवान्।

**अधिकारी** – चन्नम्मा कुत्र गतवती इति किं कोऽपि जानाति ?

**सुधाकरः** – चन्नम्मा तीव्रम् अस्वस्था इति शृणुमः।

**अधिकारी** – सा औषधं स्वीकृतवती स्यात् खलु?

**सुधाकरः** – वैद्यः सूच्यौषधं दत्तवान् इति श्रुतम्। ह्यः निवेदिता- विद्यालयस्य शिक्षिकाः आगतवत्यः। भवान् न आसीत्। अतः एकं पत्रं दत्तवत्यः।

**अधिकारी** – प्राचार्या मुख्याध्यापिका च किम् आगतवत्यौ ?

**सुधाकरः** – नैव, केवलं प्राचार्या आगतवती। 'भवान् दूरवाणीं करोतु' इति उक्तवती।

**अधिकारी** – भवतु, भवान् गच्छतु।

# पिता-पुत्रयोः सम्भाषणम्

*सप्तमीविभक्तिः*
*भूते क्तवतु*

पिता – आगच्छतु। यात्रा कथम् आसीत्?

शिवरामः – सम्यक् आसीत् तात !

पिता – भवान् कदा मुम्बईं प्राप्तवान् ?

शिवरामः – अहं सोमवासरे प्रातः ७ वादने एव प्राप्तवान्।

पिता – अनन्तरं भवान् किं किं कृतवान् ?

शिवरामः – ततः मित्रस्य गृहं गतवान्। तत्रैव स्नानमपि कृतवान्। उपहारं खादितवान्। ततः कुवेम्पु मन्दिरं गतवान्।

पिता – किं भवान् एकः एव गतवान् ?

शिवरामः – नैव, मम मित्रम् अहं च गतवन्तौ। कार्यक्रमः न आरब्धः आसीत्। समये आवां प्राप्तवन्तौं।

पिता – तदनन्तरम्....?

शिवरामः – कार्यक्रमः दशवादने आरब्धः। श्यामला प्रार्थनां गीतवती। स्वागतानन्तरं मम भाषणम् आसीत्। अहं भाषणं कृतवान्। अध्यक्षः मां श्लाघितवान्। जनाः उच्चैः हर्षोद्गारं कृतवन्तः। करताडनमपि कृतवन्तः। अधिकारी आगामिवर्षे अपि सम्मेलनं प्रति आगमनाय प्रार्थितवान्। ११:३० वादने कार्यक्रमः समाप्तः। अन्ते महिलाः 'वन्दे मातरं' गीतवत्यः।

पिता – पुनः मित्रस्य गृहं किं न भवान् गतवान् ?

शिवरामः – कुवेम्पुमन्दिरतः तस्य गृहं बहु दूरे अस्ति। अतः अहं साक्षात् याननिस्थानकं गतवान्। तत्र मम वयस्यौ मिलितवन्तौ। बहुकालं वयं सम्भाषणं कृतवन्तः ततः मध्याह्ने ३वादने अहं प्रस्थितवान्।

पिता – अस्तु ! स्नानं करोतु ! भोजनं करोतु ! कञ्चित्कालं विश्राम स्वीकरोतु।

शिवरामः – अस्तु ! तात।

# कक्ष्यायां छात्राणां सम्भाषणम्

श्वः/परश्वः
लृट्

| | | |
|---|---|---|
| प्रदीपः | – | अरुण ! भवतः गणितपुस्तकं ददाति किम् ? |
| अरुणः | – | भवान् किमर्थं विद्यालयं नागतवान् ? |
| प्रदीपः | – | मम अतीव शिरोवेदना आसीत्। अतः शयनं कृतवान्। |
| अरुणः | – | इतिहासपुस्तकं भवान् इतोऽपि न दत्तवान्। इदानीं गणितपुस्तकमपि नयति। कदा प्रतिददाति ? |
| प्रदीपः | – | श्वः सायङ्काले भवतः पुस्तकं दास्यामि। |
| ज्योतिः | – | प्रदीप ! भवान् असत्यं वदति किम् ? श्वः भवान् बन्धुगृहं गमिष्यति। परश्वः आगमिष्यति। कदा गणितं लेखिष्यति ? |
| प्रदीपः | – | अहं विस्मृतवान्। परश्वः निश्चयेन पुस्तकं दास्यामि। |
| कृष्णः | – | ज्योति ! अद्य मम गृहम् आगच्छतु। सम्यक् पठिष्यावः। |
| अरुणः | – | भवान् पठिष्यति, लेखिष्यति इति वदति केवलम्। |
| कृष्णः | – | माला शिक्षिका श्वः संस्कृतपाठं लेखिष्यति। द्वितीयपाठस्य प्रश्नान् प्रक्ष्यति। रिक्तस्थानानि पूरयन्तु इति दास्यति। अतः बहु पठिष्यामि। |
| अरुणः | – | भवन्तः मम गृहम् आगच्छन्तु। सर्वे मिलित्वा पठिष्यामः। |
| ज्योतिः | – | भवन्तौ द्वौ अपि मिलतः चेत् न पठिष्यतः, युद्धं करिष्यतः। अतः स्वगृहे एव पठन्तु। |

# वार्षिकोत्सवः

| | | |
|---|---|---|
| *अस्ति* | *स्तः* | *सन्ति* |
| *असि* | *स्थः* | *स्थ* |
| *अस्मि* | *स्वः* | *स्मः* |

**पुत्री** – अम्ब ! महती बुभुक्षा अस्ति।

**माता** – सुधे ! किमर्थं त्वरा ?

**पुत्री** – मम विद्यालये वार्षिकोत्सवः अस्ति। तत्र नाटकं, गीतं, नृत्यं, भाषणम् इत्यादि कार्यक्रमाः सन्ति।

**माता** – भवती वार्षिकोत्सवे किं करोति ?

**पुत्री** – वृन्दगाने अहम् अस्मि। मम सखी नृत्ये अस्ति। बालकाः केवलं नाटके सन्ति। वयं बालिकाः पुनः यष्टिक्रीडायाम् अपि स्मः। द्वौ बालकौ विनोदनाटके स्तः।

**माता** – निपुणा खलु मम पुत्री।

**सखी** – सुधे ! कुत्र असि ?

**पुत्री** – अत्र अस्मि। किम् वदतु।

**सखी** – भवती अद्य कदा विद्यालयं गच्छति।

**पुत्री** – किमर्थम् ? भवती अपि आगच्छति वा ?

**माता** – युवां मिलित्वा कस्मिन्नपि कार्यक्रमे न स्थः वा ?

**पुत्री** – आवां द्वे अपि वृन्दगाने यष्टिक्रीडायाम् च स्वः।

**पिता** – पुत्रि ! किं कुर्वन्ति मिलित्वा ?

**माता** – अद्य पुत्र्याः विद्यालये वार्षिकोत्सवः अस्ति। वयं शीघ्रं गत्वा पुरतः उपविशामः।

# देहलीं गमिष्यामः

भविष्यत्

| | | |
|---|---|---|
| गिरिजा | – | विरामसमये कुत्रापि प्रवासं करिष्यामः। |
| पतिः | – | आगामिसप्ताहे मम कार्यालयतः पञ्चजनाः नवदेहलीं गमिष्यन्ति इति श्रूयते। वयमपि तैः सह गमिष्यामः। |
| गिरिजा | – | देहल्यां कुत्र वासं करिष्यामः ? |
| पतिः | – | ते सर्वेऽपि धर्मशालायां वासं करिष्यन्ति। भोजनम् उपाहारमन्दिरे करिष्यामः। |
| अजितः | – | तात ! श्वः आरभ्य मासं यावत् विरामः अस्ति। वयमपि प्रवासार्थं गमिष्यामः। |
| पतिः | – | आगामिसप्ताहे प्रवासः भविष्यति। चिन्ता मास्तु। |
| माता | – | पुत्रौ उष्णजलं पास्यतः। तत् कथं नेष्यामः। |
| पिता | – | समीचीनं जलं मार्गे अपि भविष्यति, तत् वयं क्रेष्यामः। |
| माता | – | खाद्यानि वयं प्रथमम् एव क्रेष्यामः। देहल्याम् अतिशैत्यम्। अतः अधिकानि वस्त्राणि स्वीकरोतु। |
| पुत्री | – | तत्र गन्तुं कः चिटिकाः क्रेष्यति ? |
| पिता | – | अहं चिटिकाः आनेष्यामि। |
| पुत्री | – | अग्रज ! त्वं कुत्र उपवेक्ष्यसि ? |
| अजित | – | अहं वातायनपार्श्वे उपवेक्ष्यामि। |
| माता | – | युवां मम पार्श्वे उपवेक्ष्यथः। गमनसमये निद्रां करिष्यथः। |
| पुत्री | – | एवं समीचीनम्। तथैव उपवेक्ष्यावः। |

# संस्कृतकक्ष्या-II

चतुर्थी

छात्राः – अहो ! किम् अद्य कक्ष्यायां बहूनि चित्राणि सन्ति। गजाः सन्ति। वृषभाः सन्ति। वृक्षाः सन्ति। पर्वताः सन्ति। फलानि सन्ति। पुष्पाणि सन्ति। नद्यः सन्ति। बालिकाः नृत्यन्ति।

आचार्या – सर्वे आगतवन्तो वा ?

छात्राः – आम् सर्वे आगतवन्तः।

आचार्या – अद्य एतानि चित्राणि सन्ति खलु। अहं सर्वेभ्यः ददामि। यस्य नाम वदामि सः उत्तिष्ठतु। फलचित्रं प्रभाकराय ददामि। नदीचित्रं लतायै ददामि। वृक्षचित्रं एतस्मै बालकाय ददामि। पर्वतचित्रं भारत्यै ददामि।

रञ्जिता – मान्ये ! मह्यं गजचित्रं ददातु।

दिनेशः – तस्यै वृषभचित्रं ददातु। गणेश ! तुभ्यं बालिकाचित्रं आचार्या दत्तवती वा ? मान्ये ! मह्यं फलचित्रं मास्तु फलमेव ददातु।

आचार्या – चित्रायै किमपि न ददामि। सा कोलाहलं करोति।

चित्रा – अहं कोलाहलं न करोमि।

आचार्या – अस्तु ! स्वीकरोतु। भवन्तः सर्वे स्व-स्व चित्राणि पश्यन्तु। पञ्च-पञ्च वाक्यानि संस्कृत भाषया लिखन्तु।

# अनुमतिः

*सप्तमी/तसिल्*

प्रकाशः – अम्ब ! मम विद्यालये प्रवासः अस्ति। १५० रूप्यकाणि एकस्य। अहम् अपि गच्छामि वा ?

माता – अहं कथं वदामि ? पिता खलु धनं ददाति ?

प्रकाशः – भवती एव वदतु तातम्।

माता – कुत्र प्रवासः ?

प्रकाशः – प्रथमं विद्यालयतः पक्षिधाम गत्वा वस्तुप्रदर्शनालयं गच्छन्ति। तत्रैव उपाहारं खादित्वा उद्यानं गच्छन्ति। उद्याने क्रीडित्वा मन्दिरं गच्छन्ति। मन्दिरे श्लोकम् उक्त्वा भोजनालयं गच्छन्ति।

माता – कति छात्राः गच्छन्ति भोः ?

प्रकाशः – मम कक्ष्यायां सर्वेऽपि गच्छन्ति। ते सर्वे धनमपि दत्तवन्तः। इतः परम् अहम् एकाकी तातं पृष्ट्वा धनं ददामि।

माता – श्वः एव तातं पृष्ट्वा, धनं नयतु।

प्रकाशः – अम्बायाः अनुमतिः प्राप्ता। अर्धं कार्यं समाप्तम्।

पिता – वत्स ! कस्मिन् विषये अनुमतिः ?

प्रकाशः – तात ! मम विद्यालये प्रवासार्थं पक्षिधाम गच्छन्ति। अतः १५० रुप्यकाणि एकस्य।

पिता – सर्वे गच्छन्ति खलु। सर्वैः सह मिलित्वा गच्छतु। वस्तुप्रदर्शनालयं सम्यक् पश्यतु।

प्रकाशः – धन्यवादः तात ! श्वः धनं नेष्यामि।

# सख्याः आगमनम्

*किं, कदा, कुत्र?*
*कुतः कथम्?*
*किमर्थम् कति?*

सुनीता – अहो ! चिरात् दर्शनम् ? आगच्छतु उपविशतु।

सुशीला – किं भगिनि ! बहुदिनेभ्यः आगच्छामि इति चिन्तितवती। रघुवीरः नास्ति किम् ?

सुनीता – वाणी अपि आगतवती किम्? कुशलं वा ? पातुं किं ददामि ?

सुशीला – मास्तु भगिनि ! विवाहगृहात् आगतवती अहम्। कथमस्ति भवत्याः स्वास्थ्यम् ?

सुनीता – चिन्ता नास्ति। इदानीं किञ्चित् उत्तमम् अस्ति।

रघुवीरः – कदा आगतवती भवती ? वाणी कुशलिनी वा ?

सुशीला – दशनिमेषेभ्यः पूर्वम् आगतवती। वाणी कुशलिनी अस्ति। भवान् कुतः आगतवान् ?

रघुवीरः – अद्य अस्माकं कार्यालये कश्चन कार्यक्रमः आसीत्। ततः आगतवान् किम् आदित्यः नागतवान् ? कुत्र गतवान् ?

सुशीला – सः किञ्चित् विलम्बेन आगच्छति। तस्य कार्यालयकार्यं बहु अस्ति इति।

सुनीता – भगिनि ! भवती पूजादिने किमर्थं नागतवती ?

सुशीला – तस्मिन् दिने पुत्र्याः बहु अस्वास्थ्यम् आसीत्। अतः नागतवती। तद्दिने कति जनाः आगतवन्तः ?

सुनीता – प्रायः ३० जनाः आगतवन्तः।

रघुवीरः – सुनीते ! केवलं वचनेन एव समापयति उत किञ्चित् किमपि ददाति ?

सुनीता – अहम् इदानीमेव आनयामि। भवन्तः सम्भाषणं कुर्वन्तु।

# प्रश्नोत्तरम्

*लोट्*

| | | |
|---|---|---|
| **पिता** | – | नलिनि ! अद्य भवत्याः सख्यः सन्ति खलु। अहं प्रश्नान् पृच्छामि। भवत्यः उत्तरं वदन्तु। |
| **नलिनी** | – | भवान् कष्टकरं प्रश्नं मा पृच्छतु। भोः आगच्छन्तु। वयमेव जयं प्राप्नुमः। तात ! अन्ते उपायनं किमपि ददातु। |
| **पिता** | – | प्रथमः प्रश्नः-अहं कन्दुकम् उपरिक्षिपामि। किमर्थं सः अधः पतति ? माया वदतु। |
| **माया** | – | कन्दुकं ग्रहणार्थं तत्र कोऽपि नास्ति। अतः अधः पतति। |
| **पिता** | – | समीचीनम्; रामः कृष्णस्य अनुजः। कृष्णस्य पिता शिवः रामस्य पिता कः ? गिरिजा वदतु। |
| **गिरिजा** | – | अहो तावदपि न जानाति वा ? रामस्य पिता दशरथः। |
| **पिता** | – | असमीचीनम्। एतस्य अङ्कः नास्ति। |
| **नलिनी** | – | किमर्थं तात ! |
| **पिता** | – | अहो ! अहमिदानीं रामायणस्य राम विषये न पृष्टवान्। स्मरति ? भवतु अन्यः प्रश्नः। स्पर्धायाः अन्ते कः कार्यक्रमः अस्ति ? अथवा स्पर्धायाः अन्ते कः किं ददाति ? |
| **माया** | – | एतस्य उत्तरं नलिन्याः पिता एव जानाति। |
| **पिता** | – | कः अर्थः ? विस्तरेण वदतु। |
| **नलिनी** | – | एषा अपि स्पर्धा न वा ? भवान् किं ददाति ? |
| **माया** | – | भवान् नलिन्याः पिता अस्ति। भवान् एव सुन्दरं उपायनं दास्यति। |
| **पिता** | – | या पञ्चप्रश्नानामुत्तरं सम्यक् वदिष्यति तस्यै अहम् एकां सुन्दरीं पाञ्चलिकां दास्यामि। |

# बाल्यकालस्मरणम्

स्म

**विजयः** – विनय! सप्ताहात् पूर्वं परीक्षिताचार्यः स्वर्गस्थः इति वार्ता।

**विनयः** – एवं वा ? बहु वृद्धः आसीत् सः। बहु शास्त्राणि जानाति स्म। सम्यक् पाठयति स्म आचार्यः।

**विजयः** – किन्तु भवान् तु न पठति स्म।

**विनयः** – तदा तु बाल्ये वयं विद्यालयं न गच्छामः स्म। त्वमपि आम्रफलं खादसि स्म सदा। मम मित्राणि अपि अटन्ति स्म।

**विजयः** – सत्यम्। मम गृहे अपि भगिन्यौ अम्बां वदतः स्म। माता तर्जयति स्म। पिता तु कोपेन ताडयति स्म।

**विनयः** – किन्तु मम गृहे बहु न तर्जयन्ति स्म। अहं तु रात्रौ पठामि स्म। प्रथमां श्रेणीं प्राप्नोमि स्म।

**विजयः** – विनय ! ते प्रियङ्का मालविका च सदा कलहं कुरुतः स्म। स्मरति वा ? बहु विनोदः भवति स्म।

**विनयः** – एवम्, आवां ते द्वे अपि पीडयावः स्म। ते द्वे रोदनं कुरुतः स्म।

**विजयः** – भोः इदानीं पठावः, श्वः एव परीक्षा। बाल्यकालस्य दिनानि अतिमधुराणि। सर्वदा स्मरणयोग्यानि।

# वार्षिकोत्सवसंरम्भः

*च, भविष्यत्, एव*

आचार्यः – श्वः वार्षिकोत्सवः भविष्यति खलु ? तन्निमित्तं सर्वसज्जताः अभवन् किम् ? भवान् वदतु विजय ! कः कः किं किं करिष्यति इति ?

विजयः – शङ्करः, राकेशः, विशाखः च सभायाः अलङ्कारं करिष्यन्ति। अमरः प्राणेशः च आसनव्यवस्थां द्रक्ष्यतः।

आचार्यः – मण्डपस्य अलङ्कारं के करिष्यन्ति ?

विजयः – उषा, तस्या सख्यः च मण्डपालङ्कारं करिष्यन्ति।

आचार्यः – दीपालङ्कारं के करिष्यन्ति ?

विजयः – नन्दीशः इत्यादयः दीपालङ्कारं करिष्यन्ति।

आचार्यः – मुख्यातिथिं कः आनेष्यति ?

विजयः – मुख्यातिथिम् अहमेव आनेष्यामि। मुरलिः तं प्रेषयिष्यति।

आचार्यः – अध्यक्षः स्वयमेव आगमिष्यति, उत कोऽपि तम् आनेष्यति ?

विजयः – अध्यक्षः स्वयमेव आगमिष्यति। प्रार्थनां रमा उषा च गास्यतः। मालार्पणम् अहं मुरलिः च करिष्यावः।

आचार्यः – श्वः कार्यक्रमः व्यवस्थितं यथा स्यात् तथा त्वं परिशीलयिष्यसि ननु ?

विजयः – तत्र सन्देहः एव मास्तु। वयं सर्वे सम्यक् कार्यक्रमं करिष्यामः।

आचार्यः – तर्हि श्वः मेलिष्यामि। अहं शीघ्रम् आगमिष्यामि।

# पुत्राभ्यां सह जनन्याः सम्भाषणम्

चतुर्थी/तुमुन्

पुत्रः – अम्ब ! कोऽपि भिक्षुकः आगतवान्।

माता – भवान् एव तस्मै एकं नाणकं ददातु।

पुत्रः – अहं पठामि भोः, भवती एव भिक्षुकाय ददातु।

माता – भवते कार्यं न रोचते। अहमेव करोमि सर्वं कार्यम्।

पुत्रः – भिक्षुकः नाणकं नेच्छति। ओदनम् इच्छति।

माता – अहं भिक्षुकाय ददामि। भवान् जलं पूरयतु।

पुत्रः – जलं पूरयामि। खादितुं मह्यमपि किमपि ददातु।

माता – भवते भोजनमेव ददामि। पञ्चनिमेषान् तिष्ठतु।

पुत्रः – भोजनम् अनन्तरम्। प्रातः भगिन्यै भवती यत् दत्तवती तत् मह्यम् अपि ददातु।

माता – भवान् केवलं खादति, न पठति, न वा कार्यं करोति।

पुत्रः – अम्ब ! भवती भोजनं कृत्वा कुत्र गच्छति ?

माता – अहं सार्वजनिक पुस्तकालयं गच्छामि।

दीप्तिः – अम्ब ! माम् अपि पुस्तकालयं नयतु। अहं द्रष्टुम् इच्छामि।

माता – अस्तु अद्य दशवादने गच्छामः।

दीप्तिः – अम्ब ! एतानि पुस्तकानि किमर्थम् अत्र स्थापितवन्तः ?

माता – केचन पुस्तकानि द्रष्टुम् इच्छन्ति। केचन क्रेतुम् इच्छन्ति। क्रेतुं ये इच्छन्ति ते केवलं बहिः पुस्तकानि पश्यन्ति।

दीप्तिः – प्रबन्धं लेखितुम् अपि इतः पुस्तकानि नयन्ति किम् ?

माता – अत्र सर्वविधानि अपि पुस्तकानि भवन्ति। केचन कथापुस्तकं

पठितुम् इच्छन्ति। केचन भाषणं सज्जीकर्तुम् इच्छन्ति। अन्ये केचन बालकेभ्यः सङ्ग्रहीतुं शक्नुवन्ति। अतः सर्वाणि अपि पृथक् स्थापयन्ति।

**दीप्तिः** – अत्र पुस्तकानि स्वीकर्तुं किम् सदस्याः आगच्छन्ति ?

**माता** – आम् ! अत्र सा व्यवस्था समीचीना अस्ति। नूतनानि स्वीकर्तुं पुरातनानि पुस्तकानि प्रत्यर्पयितुं सदस्याः आगच्छन्ति।

**दीप्तिः** – तर्हि वयं सख्यः मिलित्वा अत्र आगच्छामः। अधिकान् विषयान् सङ्ग्रहीतुं शक्नुमः।

**माता** – अनुजमपि आनयतु। सोऽपि पुस्तकपठनाभ्यासं करिष्यति।

# मातापुत्र्योः सम्भाषणम्

*भूतकृदन्त-एकवचनरूपाणि (स्त्री०)*

विजया – अम्ब ! अहम् आगतवती।

अम्बा – विजये किमर्थं विलम्बः ?

विजया – अद्य विद्यालये कोऽपि कार्यक्रमः आसीत्। तत्र भागं स्वीकृतवती।

अम्बा – भवती किं कृतवती ?

विजया – अहं गीतं गीतवती।

अम्बा – एवं.... ? अध्यापिका किम् उक्तवती ?

विजया – अध्यापिका सर्वान् श्लाघितवती। किन्तु राधा कोलाहलं कृतवती। ताम् एका तर्जितवती। सा रुदितवती।

अम्बा – अनन्तरम् ........।

विजया – परह्यः स्पर्धा आसीत् किल? तत्र नलिनी जयं प्राप्तवती। मुख्याध्यापिका पारितोषिकं दत्तवती। वय तत् दृष्टवत्यः।

अम्बा – भवतु, किमर्थं विलम्बः ? तत् न उक्तवती।

विजया – अहं तावत्पर्यन्तं घटीमेव न दृष्टवती। समयमेव न ज्ञातवती। अतः विलम्बः।

अम्बा – भवतु, अहम् अद्य मधुरं कृतवती। ददामि, भवती खादतु।

# शाटिका आवश्यकी

*वर्णाः*

सुबोधा – ममते ! किं करोति भवती? आगच्छति किम्?

ममता – कुत्र गच्छसि?

सुबोधा – एका शाटिका आवश्यकी। भवती अपि आगच्छतु। आपणं गच्छाव:।

ममता – किञ्चित् तिष्ठतु। आगच्छामि।

सुबोधा – मम मातुलस्य विवाहः अस्ति। अतः नूतनां शाटिकां क्रीणामि।

ममता – भवती कं वर्णम् इच्छति। भवत्याः नीलः वर्णः युज्यते।

सुबोधा – नैव। नीलवर्णस्य हरितवर्णस्य च शाटिका मम समीपे अस्ति। पाटलवर्णस्य पीतवर्णस्य वा इच्छामि। पश्यामः। तत्र।

ममता – कति रूप्यकाणां शाटिकां स्वीकरोति भवती?

सुबोधा – सामान्यतः ३०० रूप्यकाणाम्। ततोऽपि अधिकमूल्यस्य मास्तु। मम माता मम निमित्तम् एकाम् आनयति। सा श्वेतकृष्णवर्णयोः मिश्रिताम् एकां शाटिकां स्वीकृतवती।

ममता – भवत्याः रक्तवर्णस्य शाटिका बहु उत्तमा अस्ति भोः।

सुबोधा – किन्तु अहं तां न इच्छामि। अहं हरितवर्णस्य शाटिकां बहु इच्छामि।

ममता – अस्तु आपणे याम् इच्छति तां स्वीकरोतु।

# नूतना लेखनी

*किं कति*
*कुतः किमर्थम्*

राकेशः – किं भोः, नूतना लेखनी वा ? कुतः आनीतवान् ?

श्रीशः – मम अग्रजः 'न्यूयार्कतः' आनीतवान्।

राकेशः – वेङ्कटेशः आगतवान् आसीत् किम् ? भवान् किमर्थं तं मम गृहं न आनीतवान् ?

श्रीशः – तस्य समयः एवं नास्ति भोः। सः श्वः प्रातः गमिष्यति।

राकेशः – भवान् ह्यः किमर्थं विद्यालयं न आगतवान् ?

श्रीशः – ह्यः आवां द्वौ अपि नगरं गतवन्तौ। ततः बहूनि वस्तूनि आनीतवन्तौ। पश्यतु, एषा पेटिका अपि नूतना।

राकेशः – बहु सम्यक् अस्ति। एतस्याः कति रूप्यकाणि ?

श्रीशः – प्रायः ६५ रूप्यकाणि दत्तवान् इति चिन्तयामि।

राकेशः – श्वः मम गृहं प्रति लखनऊतः बान्धवाः आगमिष्यन्ति। एकः विवाहः अस्ति। तत्र सर्वे गच्छन्ति।

श्रीशः – तर्हि श्वः भवान् विद्यालयं नागमिष्यति ननु ?

राकेशः – अहं विवाहे न गच्छामि। लेखनं बहु अस्ति। अतः गृहे एव भविष्यामि। नूतनया लेखन्या लेखिष्यामि।

# प्रीत्या व्यवहरतः

*तृतीया/लोट्*

आदित्यः – अचिन्त्य ! भवान् तत् पुस्तकम् आनयतु।

अचिन्त्यः – अहं न आनयामि। आवश्यकं चेत् नयतु।

आदित्यः – भोः, भवान् कदा सन्तोषेण वदति ? सदा कोपं करोति।

अचिन्त्यः – त्वमपि कदापि प्रीत्या न वदसि। आदेशं करोषि।

आदित्यः – सदा श्रद्धया कार्यं करोतु। विनयेन सम्भाषणं करोतु।

अचिन्त्यः – गच्छ त्वम्। सदा उपदेशं करोषि।

माता – किमर्थं कोपेन कलहं कुरुतः ? भवन्तौ सहोदरौ खलु ? आदित्य ! त्वं कोपेन मा तर्जय, सः दुःखेन रोदिति। कदा प्रीत्या व्यवहरतः।

आदित्यः – अम्ब ! क्षम्यताम्। इतः परं सन्तोषेण एव भवावः।

अचिन्त्यः – अम्ब ! अद्य मम विद्यालये एकः बालकः भयेन आक्रोशं कृतवान्। शिक्षिका प्रीत्या सान्त्वनां कृतवती। अनन्तरं सः आनन्देन, निर्भयेन पठितवान्।

माता – अस्तु, भवन्तौ अपि एकाग्रचित्ततया पठताम्, भक्त्या नमस्कारं कुरुताम्, परिश्रमेण उत्तम-अङ्कं प्राप्नुवताम्। तदा अहमपि सन्तोषेण भवामि।

आदित्यः – अस्तु अम्ब ! तथैव कुर्वः।

# पाठनं रोचते

*(रोचते:-चतुर्थी)*

**मनोरमा** – शिक्षिकायाः आगमनपर्यन्तं किञ्चित् पाठविषये एव चिन्तयामः। वदन्तु कस्मै/कस्यै किं रोचते ? इति।

**शकुन्तला** – मह्यं फलं रोचते। लता वदतु भोः।

**रागिणी** – मह्यम् आनन्दस्य नृत्यं रोचते। तुभ्यं किं रोचते वदतु कार्तिक !

**कार्तिकः** – कार्तिकाय नाटकवीक्षणं रोचते।

**प्रशान्तः** – मालत्यै सर्वदा निद्रा रोचते। न वा मालति ?

**चूड़ामणिः** – मह्यं संस्कृतगीतं रोचते। भोः आर्ये ! भवत्यै किं रोचते इति प्रथमं वदतु।

**मनोरमा** – एतस्यै किं रोचते इति कुतूहलं वा ? शृण्वन्तु, मह्यं भाषणं रोचते।

**चेतनः** – न सर्वे मौनेन उपविशन्तु। शिक्षिका आगतवती।

**मदनः** – आगच्छतु तस्यै किं रोचते इति पृच्छामः। मान्य ! भवत्यै किं रोचते इति वदति वा ?

**शिक्षिका** – मह्यं भवतां पाठनं रोचते।

# यथा वदति तथा कुर्मः

द्वितीया

| | | |
|---|---|---|
| **अध्यापकः** | – | अखिलभारत-शिक्षक-सम्मेलनं भविष्यति। तत्र मनोरञ्जन कार्यक्रमान् कर्तुम् अवसरः अस्ति। |
| **दीपकः** | – | तर्हि वयम् एकं लघुनाटकं कुर्मः। |
| **अर्चना** | – | वयं सामूहिकगीतं गायामः। |
| **अरुणः** | – | अहम् एकपात्राभिनयं करोमि। |
| **चेतनः** | – | प्रदर्शिनी-आयोजनम् अस्ति वा? |
| **अध्यापकः** | – | महती प्रदर्शिनी भविष्यति। के तस्य कार्यं कुर्वन्ति? |
| **अरविन्दः** | – | वयं प्रदर्शिनीकार्यं कुर्मः। नूतनानि फलकानि लिखामः। बहूनि वस्तूनि सङ्गृह्णीमः। यन्त्रादीनि योजयामः। नवीनानि उपकरणानि रचयामः। |
| **पल्लवी** | – | आवां प्रार्थनां गायावः। |
| **अध्यापकः** | – | प्रबन्धकार्यं के निर्वहन्ति? |
| **श्रीनिधिः** | – | अस्माकं गणः प्रबन्धकार्यं निर्वहति। आसनस्थापनम्, अन्ते निष्कासनकार्याणि अपि अस्मदीयाः एव कुर्वन्ति। |
| **अध्यापकः** | – | कार्यक्रमस्यानन्तरं तथैव मौनं धावन्ति चेत्? |
| **चिन्मयः** | – | तथा न कुर्मः। यथा वदति तथैव कार्यं कुर्मः। |

# पूजा

*पञ्चमी*

श्रद्धा – लते ! लते ! किं करोति भवती ?

लता – आगच्छतु, आगच्छतु, कः विशेषः ? नूतनवस्त्रं धृतवती भवती।

श्रद्धा – मम गृहे श्वः पूजा अस्ति। भवती आगच्छतु। भोजनार्थम् आगच्छतु।

लता – अहमपि कार्ये साहाय्यं करोमि वस्तूनि कुतः आनयति ?

श्रद्धा – मधुराणि आपणतः आनयामि। पुष्पाणि फलानि च मम आर्यपुत्रः विपणितः आनयति। बान्धवा कदली-पत्राणि ग्रामतः प्रेषयन्ति। पूजावस्तूनि अर्चकः गृहतः एव आनयति।

लता – तिष्ठतु नलिकातः जलं स्रवति। आगच्छामि ?

श्रद्धा – भवत्याः गृहे जवनिकाः नूतनाः वा ? कुतः आनीतवती भोः ?

लता – मम पतिः प्रयागं गतवान् आसीत्। ततः जवनिकाः आनीतवान्। भवतु अहं किं कार्यं करोमि ? गृहतः शीघ्रम् आगच्छामि।

श्रद्धा – भवती शीघ्रम् आगच्छतु। तत्र किं कार्यम् इति पश्यामः। भवतु आगच्छामि।

लता – इतः कुत्र गच्छति ?

श्रद्धा – इतः मम गृहमेव गच्छामि। मम पतिः इदानीं कार्यालयतः आगच्छति। पुत्रः विद्यालयतः आगच्छति। विलम्बः अभवत्, गच्छामि।

# तं जानन्ति वा भवन्तः

| *जानाति* | *जानन्ति* |
| --- | --- |
| *जानामि* | *जानीमः* |

**कार्यकर्ता** – हरिः ओम्, सुप्रभातम्।

**गृहस्थः** – हरिः ओम् उपविशतु, कः विशेषः ? वदतु।

**कार्यकर्ता** – वेङ्कटेशकुमारः इति कश्चन सङ्गणकतन्त्रज्ञः अस्ति। तस्य गृहम् भवति। तस्य गृहस या अत्र अस्ति। तं जानन्ति वा भवन्तः।

**गृहस्थः** – वेङ्कटेशः इति नाम श्रुतवान्। तस्य गृहसंख्यां वदतु।

**कार्यकर्ता** – अहं वेङ्कटेशं जानामि। तस्य गृहसंख्या १३०५ अस्ति। तस्य गृहम् इतः बहु समीपे अस्ति।

**गृहस्थः** – वीणे ! त्वं वेङ्कटेशं जानासि ? पश्यतु एतां संख्याम्।

**वीणा** – वेङ्कटेशः, १३०५ हाँ.... भोः भवान् अपि एतं जानाति। तस्य गृहम् एतस्य पृष्ठभागे अस्ति। अस्माकं कार्यालये सर्वेऽपि तं जानन्ति।

**कार्यकर्ता** – सः उक्तवान् यत् अत्र पृच्छतु। सर्वे मां जानन्ति, इति। सोऽपि समीचीन कार्यकर्ता।

**गृहस्थः** – इदानीं स्मृतवान्। तं वयं 'कुमार' इति आह्वयामः। अतः वेङ्कटेशः इत्युक्ते न स्मृतवान्। भवतु पानीयं किमपि स्वीकरोतु।

**कार्यकर्ता** – तर्हि किञ्चित् क्षीरं ददातु। वेङ्कटेशस्य गृहे एव अद्य उपाहारः।

**वीणा** – वयमपि तस्य गृहं गृहसदस्यान् च सम्यक् जानीमः। तदा तदा गच्छामः।

**कार्यकर्ता** – अस्तु, धन्यवादः, गच्छामि। तत्र सर्वे मम प्रतीक्षां कुर्वन्ति।

# गृहिण्योः सम्भाषणम्-III

| श्रृणोति<br>श्रृण्वन्ति |
|---|

सुनीता – अहो ! एषः भवत्याः पुत्रः सम्यक् गायति खलु। सङ्गीतकक्ष्यां गच्छति किम् ?

मधुरा – नैव तस्य भगिनी गृहे अभ्यासं करोति। सः श्रद्धया श्रृणोति। अतः गायति।

सुनीता – अहं सङ्गीतं बहु इच्छामि। कक्ष्यां गच्छतु इत्युक्ते मम पुत्री न श्रृणेति एव। किन्तु चलचित्रगीतानि सदा श्रृणेति।

मधुरा – मम गृहे सर्वेऽपि सङ्गीतप्रियाः ! अतः सर्वदा भक्तिगीतानि, भावगीतानि, भजनानि, सर्वाणि अपि श्रृणुमः।

सुनीता – मम गृहे अहम् एका एव गीतं श्रृणोमि। अन्ये सर्वे वार्तां श्रृण्वन्ति। चलचित्रगीतानि श्रृण्वन्ति, तावदेव।

मधुरा – गृहे अस्माकं वचनानि केऽपि न श्रृण्वन्ति। ते यथा इच्छन्ति तथा कुर्वन्ति।

सुनीता – किन्तु मम पार्श्वगृहे माता यत् वदति तत् सर्वेऽपि श्रृण्वन्ति, पालयन्ति च। किम् अन्यत् पतिः अपि सा यथा वदति तथा श्रृणोति, जानाति वा ?

मधुरा – केषुचित् गृहेषु मातुः वचनं गृहसदस्याः श्रृण्वन्ति। केषुचित् अन्ये यत् वदन्ति तत् माता श्रृणोति तावदेव।

# शुभयात्रा

*वासराः*
*भविष्यत्*

पत्नी – सोमवासरे प्रत्यागमिष्यति खलु ?

पतिः – आम्, सोमवासरे प्रातः आगमिष्यामि। रविवासरे मम स्नेहितः सकुटुम्बम् आगमिष्यति।

पत्नी – पुत्रः सुनीलः शनिवासरे सायं चेन्नै गमिष्यति इति।

पतिः – भवतु, मङ्गलवासरे विवाहः अस्ति। अहं सोमवासरे प्रातः आगमिष्यामि खलु, सायं मिलित्वा विपणिं गमिष्यामः। मम स्नेहितमपि सूचयतु।

पत्नी – अहो ! अस्मिन् सप्ताहे बहु कार्यक्रमाः सन्ति। बुधवासरे रजन्याः विद्यालये वार्षिकोत्सवः। कार्यक्रमे तस्य भरतनाट्यम् अस्ति।

पतिः – चिन्तां मा करोतु भवती। तत्रापि गच्छामः। गुरुवासरे पूर्णतया विश्रान्तिः।

पत्नी – नास्ति भोः ! गुरुवासरे प्रतिवेशिन्याः गृहे कोऽपि विशेषः अस्ति। सा भोजनार्थमेव आहूतवती।

पतिः – भवतु, अन्यत् सर्वम् अनन्तरं चिन्तयिष्यामः। अहं तु इदानीं गच्छामि।

पत्नी – भवतः प्रयाणं सुखकरं भवतु।

पतिः – अयि ! 'शुभास्ते पन्थानः सन्तु' इति कालिदास-वचनं वदतु।

पत्नी – भवान् कालिदासः नैव खलु ?

# कार्यविवरणम्

लट्

सतीशः – उत्पीठिकायाम् एकं पुस्तकम् अस्ति। कस्य पुस्तकं भोः ?

राजारामः – तत् वा ? गिरीशस्य पुस्तकम्। सः त्यक्त्वा गतवान् स्यात् ?

सतीशः – गिरीशस्य वा ? सः किं लिखितवान् पश्यामि एकवारम्।

१. लेखकस्य कार्यालयं गच्छामि

२. अनुजायै पत्रं लिखामि

३. प्रबन्धकेन सह चर्चां करोमि

४. यानपेटिकां क्रीणामि।

किमर्थं लिखितवान् एषः। राजाराम ! श्रृणोतु भवान् एषः किमपि लिखित्वा पुस्तकं पूरितवान्।

राजारामः – तस्य कार्यविवरणपुस्तकं भोः ! सः एव आगतवान् ददातु तस्मै।

सतीशः – गिरीश ! किं भवान् पुस्तके गृहपाठं लिखितवान् ?

गिरीशः – भवान् मम पुस्तकं किमर्थं स्वीकृतवान् ? अहं प्रतिदिनं कार्याणि लिखामि। अनन्तरं रात्रौ परिशीलयामि।

सतीशः – परिशीलनानन्तरम्.....।

गिरीशः – किं कार्यं कृतवान् किं न कृतवान् इति जानामि। अनन्तरदिने यत् न कृतवान् तत् प्रथमं समापयामि।

सतीशः – बहु उत्तमम्, अहमपि इतःपरं तथैव करोमि।

# विवाहात्परम्

*पञ्चमी/आनीतवान्*

**माता** – विवाहः समाप्तः अस्ति। इतःपरम् आनीतानि वस्तूनि ददातु जगदीश !

**जगदीशः** – अम्ब ! अहम् ओङ्कारनिलयतः कटान् आनीतवान्। हरिनिवासतः महाजलपात्रम् आनीतवान्। मधुकृपातः चषकान् आनीतवान्। एतत्सर्वमपि अद्य यानेन नेष्यामि।

**माता** – ध्वनिमुद्रिका:च१५ ध्वनिमुद्रिकाः कुतः भवान् ?

**जगदीशः** – केशवनिलयतः ध्वनिमुद्रिकाः आनीतवान्। विस्मृतवान् आसम्। ताः अपि अद्य नेष्यामि।

**माता** – प्रतिनिवेशिनिगृहतः अहं स्थालिकाः आनीतवान् खलु। ताः स्थालिकाः अहं प्रत्यर्पयिष्यामि।

**जगदीशः** – अम्ब ! शङ्करमठतः अहं कलशम् आनीतवान् खलु। तस्मै ददातु।

**माता** – शिशिरस्य गृहतः भवान् आच्छादकानि आनीतवान् खलु। तानि अपि प्रेषयामि किम् ?

**जगदीशः** – मास्तु, तानि वयमेव प्रत्यर्पयामः। अनुजं शिशिरगृहं प्रेषयतु।

**माता** – अस्तु भवान् सावधानं गच्छतु।

# पदकथनक्रीडा

लोट्

आचार्या – भोः छात्राः ! अत्र, आगच्छत। मण्डलाकारेण उपविशत। क्रीडां क्रीडाम।

छात्राः – शीघ्रं शीघ्रम् आगच्छन्तु। अधिकसमयं यावत् क्रीडाम।

आचार्या – रमे ! त्वं पङ्क्तौ उपविश। भीम ! अग्रे आगच्छ। युवां किञ्चित् अपसरतम्।

प्रतीक्षा – आर्ये अहं कुत्र उपविशामि ?

आचार्या – त्वं किमर्थं विलम्बं करोषि ? शीघ्रं हेमलतायाः पार्श्वे उपविश।

सुहासः – आर्ये का क्रीडा ? कः नियमः ?

आचार्या – शृण्वन्तु, अहम् एकं शब्दं वदामि। तस्य शब्दस्य प्रत्यक्षरं शब्दः वक्तव्यः। उक्तं शब्दं पुनः मा वदन्तु। ज्ञातं खलु ?

रवीन्द्रः – क्रीडायाः नाम वदतु आर्ये।

आचार्या – क्रीडायाः नाम 'प्रत्यक्षरपदकथनम्'। 'गिरिजावल्लभः' इति शब्दः। वदतु प्रदीप ! 'गि' इति प्रथमाक्षरम्।

प्रदीपः – राकेशः प्रथमं वदतु। ततः आरम्भः भवतु आर्ये।

आचार्या – भवतु, राकेश ! वद त्वं शीघ्रम्।

राकेशः – गिरिः

चन्द्रः – रिपुः

स्नेहा – जानकी...।

प्रदीपः – नस्त्रम्।

सुजाता – लाभः।

राकेशः – भल्लुकः।

आचार्या – इदानीम् अवगतवन्तः खलु। प्रदीप एकं शब्दं वदतु। तस्य शब्दस्य प्रत्यक्षरं एकः शब्दः इति सर्वे वदन्तु क्रीडन्तु। अहमिदानीमेव आगच्छामि।

# अधिकं प्राप्तवान्

*चतुर्थी, क्तवतु*

**रामगोपालः** – विवाहकार्यक्रमः समाप्तः किम् ?

**मधुकरः** – विवाहः समाप्तः। मम कोषः अपि रिक्तः।

**रामगोपालः** – किमर्थम् ? तावत् किं कृतवान् ?

**मधुकरः** – विवाहसमये अहं जनकाय यानपेटिकां दत्तवान्। अम्बायै नूतनं कण्ठहारं दत्तवान्। अनुजाय घटीं दत्तवान्।

**रामगोपालः** – अनुजायै किं दत्तवान् ?

**मधुकरः** – अनुजायै अहं स्वर्णमयीं लेखनीं दत्तवान्। एतावदेव न, मम मातुलाय कौशेयवस्त्राणि, मातुलान्यै कौशेयशाटिका...। एवं बहुविधाः व्ययाः।

**रामगोपालः** – विवाहसमये श्वसुरः भवते किं दत्तवान् ?

**मधुकरः** – अहं तु वरदक्षिणां न स्वीकृतवान्। किन्तु अहम् अमेरिकायाम् अस्मि इतिकारणतः सः मह्यं कारयानं, सुवर्णहारम्, एकां घटीम् उत्तमानि वस्त्राणि, अन्यविधानि कानिचन वस्तूनि च दत्तवान्।

**रामगोपालः** – भवतः पत्न्यै शालिन्यै अपि दत्तवान् स्यात्।

**मधुकरः** – सा तस्य एका एव पुत्री। अतः तस्यै अपि प्रभूतं दत्तवान्।

**राम ालः** – तर्हि भवतः कोषः पुनः पूर्णः स्यादेव।

**मधुकरः** – अहम् एकः एव व्ययं न कृतवान्। मम पिता अपि व्ययार्थं धनं दत्तवान्।

**रामगोपालः** – तथापि चिन्तां न करोतु। अन्येभ्यः यावत् दत्तवान् ततोऽपि अधिकं प्राप्तवान् अस्ति।

# चित्ररचना

*यत्-तत्, द्वितीया-तृतीया*

| | | |
|---|---|---|
| **शिक्षकः** | – | भो ! अहं कृष्णफलके बहूनि चित्राणि लिखामि। भवन्तः तत् दृष्ट्वा यत् इच्छन्ति तत् लिखन्तु। |
| **चन्दनः** | – | श्रीमन् ! लेखन्या लिखामि उत अङ्कन्या ? केन लिखामः? |
| **शिक्षकः** | – | अङ्कन्या अपि लेखितुं शक्नुवन्ति। लेखन्या, वर्णलेखन्या, अन्येन केनचित् वा लेखितुं शक्नुवन्ति। |
| **वसुमति** | – | अहं अङ्कन्या लिखामि। पवित्रा लेखन्या लिखति श्रीमन् ! |
| **पवित्रा** | – | अहम् अङ्कनीं न आनीतवती। अतः लेखन्या विमानं लिखामि। |
| **अञ्जली** | – | श्रीमन् अहं कूर्चेण शृगालं लिखामि किम् ? |
| **शिक्षकः** | – | लिखतु। यदि शक्नोति तर्हि वर्णमपि योजयतु। |
| **जनार्दनः** | – | अङ्कन्या घटीं लिखामि। राघवः किमपि न लिखति। तूष्णीम् उपविष्टवान् अस्ति सः। |
| **शिक्षकः** | – | किमर्थं राघव ? किम् अभवत् भवतः ? |
| **राघवः** | – | अहम् अङ्कनीं लेखनीं वा न आनीतवान्। कथं लिखानि ? |
| **पुनीतः** | – | मम समीपे द्वे अङ्कन्यौ स्तः। स्वीकरोतु एकाम् अङ्कनीम्। |
| **राघवः** | – | धन्यवादः। श्रीमन् ! अङ्कन्या फलं लिखामि। |
| **शिक्षकः** | – | विंशति निमेषेषु भवन्तः चित्रं रचयित्वा दर्शयन्तु। परस्परं वार्तालापं मा कुर्वन्तु। |

# यदि ज्वरः तर्हि गुलिके

*यथा-तथा, यदि-तर्हि*

**अखिलः** – राजेशः किमर्थम् अद्य कार्यालयं नागतवान् ?

**माधुरी** – अद्य प्रातः आरभ्य तस्य महान् ज्वरः अस्ति भोः। अतः सः शयनं कृतवान् ?।

**अखिलः** – किं सः निद्रां कृतवान् ? तस्मै भवती औषधं दत्तवती खलु ?

**माधुरी** – इदानीं सः औषधं पीत्वा निद्रां कृतवान्। यदा षट्वादनं भवति तदा पुनः औषधं दास्यामि।

**अखिलः** – यदा उत्तिष्ठति तदा 'अहम् आगतवान्' इति वदतु।

**मधुरी** – उपविशतु। काफी ददामि। श्वः यदि ज्वरः न्यूनः भविष्यति तर्हि सः कार्यालयम् आगमिष्यति।

**अखिलः** – मास्तु यदि विश्रान्तिः आवश्यकी तर्हि स्वीकरोतु। अहं कार्यालये वदामि।

**माधुरी** – यदा ज्वरः भवति, तदा किमपि सः न स्वीकरोति। अतः निःशक्तिः भवति।

**अखिलः** – अहम् आगच्छामि। तं सूचयतु।

**राजेशः** – माधुरि ! इदानीं ज्वरः अधिकः अस्ति इति चिन्तयामि, पश्यतु। वैद्यः किम् उक्तवान् ?

**माधुरी** – यदि ज्वरः अधिकः अस्ति तर्हि गुलिके ददातु इति उक्तवान्। भवान् शयनं करोतु अहं जलम् आनयामि।

# संस्कृतसम्भाषणम्

*किमर्थम् /कति/कुतः*

शिल्पा – भोः ! भवान् सङ्गणकज्ञानं कुतः प्राप्तवान् ?

नरेन्द्रः – अहम् अमेरिकायां सङ्गणकज्ञानं प्राप्तवान्।

शिल्पा – भवान् किमर्थं भारतम् आगतवान् ? भवतः जननीजनकौ कुत्र स्तः ?

नेरन्द्रः – मम जननीजनकौ अमेरिकादेशे स्तः। अहं संस्कृत-शास्त्राणाम् अध्ययनार्थं भारतम् आगतवान्। तत्रापि संस्कृतशास्त्राध्ययनाय प्रथमं संस्कृतसम्भाषणं ज्ञातुमिच्छामि। भवती किम् अधीतवती।

शिल्पा – अहं संस्कृतसाहित्यम् अधीतवती। संस्कृते स्नातकोत्तरपदवीमपि प्राप्तवती। अधुना शोधकार्यमपि करोमि।

नरेन्द्रः – भवती अत्र कति वर्षेभ्यः कार्यं करोति ?

शिल्पा – अहं त्रयोदशवर्षेभ्यः संस्कृतप्रचारकार्यं करोमि।

नरेन्द्रः – अत्र संस्कृताध्ययनाय बहुभ्यः प्रदेशेभ्यः जनाः आगच्छन्ति किम् ?

शिल्पाः – संस्कृताध्ययनाय विदेशेभ्यः अपि प्रतिवर्षम् आगच्छन्ति, तिष्ठन्ति, पठन्ति च।

नरेन्द्रः – ते अत्र आगत्य कथम् अध्ययनं कुर्वन्ति ?

शिल्पाः – ते अत्र आगत्य पठन्ति। किन्तु मन्दगत्या शिक्षणं भवति। यतः ते शीघ्रम् उच्चारयितुं न शक्नुवन्ति। किन्तु मासत्रयं मासचतुष्टयं वा स्थित्वा, सम्यक् ज्ञात्वा गच्छन्ति। अत्रत्येन संस्कृतवातावरणेन अत्यन्तं प्रभाविताः भवन्ति।

नरेन्द्रः – अहं बहून् विषयान् ज्ञातवान्, धन्यवादः। अहमपि संस्कृतसम्भाषणाभ्यासद्वारा संस्कृतशास्त्राणाम् अध्ययनार्थं परिश्रमं करिष्यामि।

# बेङ्गलूरुनगरे अनुभवः

*द्वितीया बहुवचनम्*

**सुधीरः** – अभिराम ! भवान् बेङ्गलूरुनगरं गत्वा किं किं दृष्टवान् ?

**अभिरामः** – अहम् पुस्तकापणं गतवान् । तत्र पुस्तकानि दृष्टवान्। कादम्बरीं क्रीतवान्। उपन्यासान् दृष्टवान्।

**सुधीरः** – तत्र विश्वविद्यालये प्रबन्धकान् दृष्टवान् किम् ?

**अभिरामः** – विश्वविद्यालये न केवलं प्रबन्धकान्, अपितु बहून् शोधच्छात्रान् दृष्टवान्। अनेकान् लेखान् सङ्गृहीतवान्।

**सुधीरः** – तत्र प्रसिद्धम् उद्यानं न गतवान् किम् ?

**अभिरामः** – मध्याह्ने वस्तुसंग्रहालयं गतवान्। तत्र अनेकानि वस्तूनि दृष्टवान्। पुरातनानि आयुधानि दृष्टवान्। मार्गदर्शकान् पृष्टवान्। सायम् उद्यानं गतवान्। तत्र वर्णरञ्जितानि पुष्पाणि दृष्टवान्। पुष्पैः शोभमानाः लताः दृष्टवान्। तृणैः निर्मितानि चित्राणि दृष्टवान्।

**सुधीरः** – तर्हि बेङ्गलुरुनगरं द्रष्टुम् एकं दिनं न पर्याप्तम्। भवान् तत्र कति दिनानि अटितवान् ?

**अभिरामः** – दर्शनीयानि स्थानानि बहूनि सन्ति तत्र। किन्तु कार्यभारकारणतः अहं शीघ्रम् आगतवान्।

**सुधीरः** – पुनः मिलामि, भवतः अनुभवान् वदतु।

# किञ्चित् पाठयतु

*परितः*

**अनीता** – वत्से ! आगच्छतु, स्थालिकां स्थापयतु। भोजनं सिद्धम्।

**पुत्री (राधिका)** – अम्ब ! किम् अस्मिन् चषके शर्करा आसीत् ? चषकं परितः पिपिलिकाः सन्ति।

**अनीता** – अहो ! विस्मृतवती आसम्। चषकं क्षालयित्वा स्थापयतु। अनुजम् अपि आह्वयतु।

**पुत्री** – दिलीप ! उत्पीठिकां परितः पुस्तकानि स्थापितवान् खलु। सदा भवान् पुस्तकानि अव्यवस्थिततया एव स्थापयति। आगच्छतु भोजनार्थम्।

**अनीता** – दिलीप ! स्थालिकां परितः मा पातयतु। सम्यक् भोजनं करोतु।

**दिलीपः** – भगिनि ! 'परितः' शब्दस्य एकं वाक्यं वदतु। विद्यालये मम स्नेहितः मां पृष्टवान्। अहम् एवम् उक्तवान्–'देवालयं परितः प्रदक्षिणं करोमि' इति। एतत् वाक्यम् अशुद्धम् उत शुद्धमस्ति?

**राधिका** – वाक्यं शुद्धमेव अस्ति। एतादृशानि अन्यानि वाक्यानि यथा–'गृहं परितः प्राकारः अस्ति।' 'दीपं परितः कीटाः सन्ति।' 'शिक्षकं परितः छात्राः सन्ति।'

**अनीता** – इदानीं मौनेन खादन्तु। अनन्तरं पाठयतु भवती।

**दिलीपः** – भोजनानन्तरं मम प्रकोष्ठम् आगच्छतु। किञ्चित् पाठयतु।

# रम्याप्रदर्शिनी

*तृतीया बहुवचनम्*

**पुत्रः** – तात ! अद्य प्रदर्शिनीं द्रष्टुं किं नगरं गच्छाम ?

**पिता** – प्रदर्शिनी कुत्र आयोजिता अस्ति? किं भवान् स्थलं जानाति ?

**पुत्रः** – प्रदर्शिनिस्थलम् अहं जानामि। गृहजनाः सर्वे गच्छाम।

**पिता** – अहं ५-३० वादने मम कार्यं समापयामि। गच्छाम।

**मञ्जुला** – तात ! पश्यतु, प्रदर्शिनी विविधवर्णरञ्जितैः दीपैः अलङ्कृता अस्ति।

**पुत्रः** – अन्तः गच्छामः। पश्यतु, दण्डैः विविधविन्यासं कृतवन्तः।

**माता** – अत्र पश्यतु, शलाकाभिः चित्राणि कृतवन्तः।

**पुत्रः** – तत्र गच्छाम। एका पाञ्चालिका तस्याः स्नेहितैः सह क्रीडति। अपरां पश्यतु, सखीभिः सह नृत्यति। अन्या बालकैः युद्धयति।

**पिता** – वत्स ! प्रदर्शिनीदर्शनार्थं वयं यत् आगतवन्तः तत् सार्थकम् अभवत्।

**माता** – प्रदर्शिनी नूतनोपकरणैः सज्जीकृतवन्तः सन्ति। अस्मिन् वर्षे प्रदर्शिनी समीचीना अस्ति।

**मञ्जुला** – अहो, तत्र पश्यतु अम्ब ! देवीं सम्यक् अलङ्कृतवन्तः सन्ति। अहो, अपूर्वम्। वर्णोपेतैः दीपै, अनेकाभिः मालाभिः, पुष्पैः, फलैः विविधैः शाकैः देव्याः मण्डपः अलङ्कृतः अस्ति। अतः सः द्रष्टृणां सर्वेषां मनः आकर्षति। प्रथमं तत्र गच्छामः।

**माता** – सत्यम्, तत्र गच्छाम। कञ्चित्कालं स्थित्वा पश्यामः। पुत्र! भवन्तं प्रदर्शिनीविषयं कः उक्तवान् ?

**पुत्रः** – मम स्नेहिताः सर्वे दृष्टवन्तः। ते माम् उक्तवन्तः।

**पिता** – परश्वः रविवासरः खलु ? यदि इच्छन्ति पुनः आगच्छाम। गच्छाम इदानीम्।

# अपेक्षाः पूरयिष्यति

*चतुर्थी बहुवचनम्*

**मुख्याध्यापकः** – छात्राः ! एका सन्तोषवार्ता अस्ति। यः अस्माकं राज्यस्य मुख्यमन्त्री अस्ति तस्य अद्य जन्मदिनम् अस्ति। सः अतीव दयालुः अस्ति उदारः अपि अस्ति।

**छात्राः** – श्रीमन् ! ध्वनिवर्धकः सम्यक् नास्ति। अन्ते न श्रूयते।

**मुख्याध्यापकः** – अस्तु, उच्चैः वदामि। किं श्रूयते इदानीम् ?

**छात्राः** – आम्, श्रूयते।

**मुख्याध्यापकः** – सः मुख्यमन्त्रिमहाशयः अस्माकं शालायाः शिक्षकेभ्यः अमूल्यानि वस्त्राणि दत्तवान्। शिक्षिकाभ्यः शाटिकाः दत्तवान्। प्रौढशालायाः छात्रेभ्यः समवस्त्राणि दत्तवान्। प्राथमिक-शालाच्छात्रेभ्यः पुस्तकानि दत्तवान्।

**छात्राः** – श्रीमन् ! बालेभ्यः सः किं दत्तवान् ?

**मुख्याध्यापकः** – बालेभ्यः अधिकानि क्रीडासाधनानि दत्तवान् सः। किञ्चित् धनमपि दत्तवान् अस्ति। एतदतिरिच्य अन्यत् किम् अपेक्षितम् इति भवन्तः वदन्तु।

**प्रौढच्छात्राः** – अस्माकं प्रकोष्ठेभ्यः (कक्ष्याभ्यः) अधिकानि आसनानि आवश्यकानि।

**शिक्षिका** – बालानां कक्ष्याभ्यः पाठोपकरणानि आवश्यकानि।

**शिक्षकः** – सर्वेभ्यः बालेभ्यः क्रीडासाधानानि अत्यावश्यकानि।

**मुख्याध्यापकः** – अस्तु, एताः अपेक्षाः सः पूरयिष्यति प्रायः। पुनः अपि किमपि अपेक्षितं चेत् श्वः सूचन्तु। धन्यवादः।

# शिल्पकार:

षष्ठी

पथिक: – भो: शिलां कुट्टयित्वा कुट्टयित्वा भवान् किंवा करोति ?

शिल्पकार: – अहं गणेशस्य विग्रहं करोमि।

पथिक: – किमर्थं भवान् शिवस्य विग्रहं न करोति ? किं भवान् गणेशस्य भक्त: ?

शिल्पकार: – शिवस्य विग्रह: लिङ्गरूप:, अत: अहं गणेशस्य विग्रहं करोमि।

पथिक: – भवान् सर्वविधान् विग्रहान् अपि करोति किम् ?

शिल्पकार: – भवते कीदृश: विग्रह: आवश्यक: ? देवस्य चेत् कस्य देवस्य? देव्या: चेत् कस्या: देव्या: ? रामस्य लक्ष्म्या: सरस्वत्या: उत कृष्णस्य ? कस्य विग्रह: आवश्यक: ?

पथिक: – नवरात्रसमये पूजां कर्तुं लक्ष्म्या: विग्रह: आवश्यक:। तथैव पार्वत्या: (गौर्या:) विग्रह: अपि आवश्यक:।

शिल्पकार: – भवते कदा आवश्यकम् ?

पथिक: – मह्यं जुलै-मासस्य १० दिनाङ्के आवश्यकम्। कृत्वा ददाति किम् ? एकस्य विग्रहस्य कृते कति रूप्यकाणि ?

शिल्पकार: – देव्या: इति कारणत: कति रूप्यकाणि इति न वदामि। भवानेव चिन्तयित्वा ददातु।

पथिक: – अस्तु जुलै-मासस्य १० दिनाङ्के आगच्छामि।

# पीतवर्णः

षष्ठी

दिव्या – माले ! आगच्छति वा ? आपणं गच्छाव।

माला – आगच्छामि, गच्छाव। कस्य आपणं गच्छाव ?

दिव्या – प्रथमं पादरक्षायाः आपणं गच्छाव। अहो... तत्र एकः आपणः अस्ति।

आपणिकः – कस्याः कृते पादरक्षा ?

दिव्या – मम कृते एव। तां पीतवर्णां पादरक्षां ददातु। कतिरूप्यकाणि?

आपणिकः – एतस्याः कृते १५० रूप्यकाणि। कृष्णवर्णपादरक्षायाः न्यूनं मूल्यम्।

दिव्या – पीतवर्णां पादरक्षां दर्शयतु।

माला – पादरक्षायाः मूल्यम् अधिकम् अस्ति भोः। एषा मास्तु।

दिव्या – नैव, मम अम्बा पीतवर्णस्य वस्त्रम् आनीतवती। अतः पीतवर्णपादरक्षा आवश्यकी। भवतु आगच्छतु। कङ्कणस्य आपणं। गच्छामः।

माला – आगच्छतु, किं? कङ्कणानि अपि पीतवर्णयुतानि एव आवश्यकानि वा?

दिव्या – आम् सत्यम्। आगामि अगस्तमासस्य चतुर्थे मम मातुलस्य विवाहः भविष्यति। तदा पीतवर्णस्य वस्त्रम्, पीतवर्णस्य कङ्कणम्, पीतवर्णस्य तिलकं, पीतवर्णस्य पादरक्षां च धरिष्यामि। सर्वाणि अपि पीतवर्णस्य एव भविष्यन्ति।

माला – तर्हि अहम् एकम् उपायं वदामि किम् ?

दिव्या – वदतु, वदतु ?

माला – भवत्याः मातुलस्य विवाहपर्यन्तं दन्तधावनं मा करोतु। तदा भवत्याः दन्ताः अपि पीतवर्णाः भवन्ति।

# मम पतिः भोः !

एव

| | | |
|---|---|---|
| **विमला** | – | अश्विनि ! पाकः सिद्धः किम् ? |
| **अश्विनी** | – | भोः ! अद्य जलमेव नासीत्। भवत्याः..... |
| **विमला** | – | मम अद्य पाककार्यमेव नास्ति। अद्य वयं विवाहं गच्छामः। किन्तु मम पतिः कार्यालयतः न आगतवान् एव। |
| **अश्विनी** | – | भवत्याः पुत्री सङ्गीतकक्ष्यां न गच्छति किम्? |
| **विमला** | – | सा सङ्गीतं न इच्छति एव। भवत्या किमर्थं सङ्गीतकक्ष्यागमनं पृष्टम्? |
| **अश्विनी** | – | अद्य सा किमपि गीतवती। अहं तत् श्रुतवती। सा सम्यक् गायति। अतः अहं चिन्तितवती एषा सङ्गीतकक्ष्यां गच्छति इति। |
| **विमला** | – | अश्विनि ! अद्य प्रातःकाले एव कोऽपि भवत्या सह सम्भाषणं करोति स्म खलु ? कः सः ? |
| **अश्विनी** | – | अद्य प्रातः अहम् अन्येन केनापि सह सम्भाषणं न कृतवती एव। तदस्तु, भवत्या दृष्टः सः कथम् अस्ति ? |
| **विमला** | – | सः उन्नतः उपनेत्रधारी, श्वेतः..... |
| **अश्विनी** | – | सः ! सः एव मम पतिः भोः। |
| **विमला** | – | एवं वा ! दूरात् अहम् अन्यः कोऽपि नूतनः इति चिन्तितवती। |

# देहलीदर्शनम्

लङ्

रामचन्द्रः – कदा आगच्छत् देहलीतः ?

चेतनः – ह्यः एव आगच्छम्।

रामचन्द्रः – प्रयाणं सुखकरम् आसीत् किम् ?

चेतनः – प्रयाणं तु सुखकरम् आसीत्। १० दिनाङ्के प्रातः एव प्राप्नुवम्। स्नेहितः निस्थानम् आगच्छत्। तेन सह अगच्छम्।

रामचन्द्रः – देहलीनगरे किं किम् अपश्यत् ?

चेतनः – कुतुबमीनारम् अपश्यम्। सुन्दरम् अस्ति। मार्गदर्शकः विवरणम् अकरोत्।

रामचन्द्रः – राष्ट्रपतिभवनं न अपश्यः किम् ?

चेतनः – तत्तु अपश्यम्। बहु विशालम् अस्ति।

रामचन्द्रः – भोजनार्थं किम् अकरोः ?

चेतनः – आवां कमलमन्दिरं द्रष्टुं बहुदूरम् अगच्छाव तत्रैव समीपे दक्षिण-भारतीय-उपाहार मन्दिरम् अस्ति तत्र भोजनार्थम् अगच्छाव। रोटिकाः, ओदनं, च अखादाव। बहु स्वादिष्टम् आसीत्।

रामचन्द्रः – देहलीतः किम् आनयः।

चेतनः – किमपि न आनयम्। रविवासरः इति सर्वे आपणाः पिहिताः आसन्।

रामचन्द्रः – तव स्नेहितोऽपि निस्थानम् आगच्छत् वा ?

चेतनः – नैव, तस्य सङ्गणककार्यम् अस्ति इति तथैव अगच्छत्। गमन-समये बहूनि फलानि अपि अयच्छत्।

# वार्षिकोत्सववर्णनम्

*नैव/अपि/सम्यक्*

**पत्नी** – ह्यः वयं विद्यालयस्य वार्षिकोत्सवं गतवत्यः।

**पतिः** – कार्यक्रमः कथम् आसीत् ?

**पत्नी** – सम्यक् आसीत्। परं किञ्चित् दीर्घः कार्यक्रमः आसीत्।

**पतिः** – के के कार्यक्रमा आसन् ?

**पत्नी** – नूतनानां कार्यक्रमाणाम् आयोजनं कृतवन्तः। राजस्थानी-गीतस्य नृत्यं बालिकानाम् आसीत्। बालकानाम् हिन्दी-गीतस्य नृत्यम् आसीत्।

**पतिः** – केवलं नृत्यम् आसीत् किम् ?

**पत्नी** – नैव, शिक्षकाणां संस्कृतनाटकम् आसीत्। ते सम्यक् न कृतवन्तः। जनाः अपि अर्थम् अज्ञात्वा कोलाहलं कृतवन्तः।

**पतिः** – बालकानां नाटकं न आसीत् वा ?

**पत्नी** – नैव, आरम्भे एव युवतीनाम् स्वागतनृत्यम् आसीत्। अपरः कार्यक्रमः अतिविशिष्टः।

**पतिः** – कः कार्यक्रमः ?

**पत्नी** – 'पञ्चभूतानां मेलनं इति' प्रथमं, भूमिः, आकाशः, पवनः, पावकः, जलम्-एतेषां पृथक् नृत्यम्। अनन्तरं सर्वेषां मिलित्वा नृत्यम्। मध्ये मध्ये सम्भाषणम्-इत्युक्ते नृत्यरूपकम् आसीत्।

**पतिः** – कार्यक्रमस्तु सम्यक् आसीत्। तथैव अलङ्काराः अपि आसन् किम् ?

**पत्नी** – दीपानाम् अलङ्कारः, ध्वनिवर्धकानां, पुष्पाणां, फलानां-इत्यादिनां बहुविधाः अलङ्काराः आसन्।

# यात्राचिटिकारक्षणम्

अस्/नी/लोट्

**प्रबन्धकः** – महेश ! अद्य आरक्षणार्थं रेलयाननिस्थानकं गच्छतु। द्वयोः हरिद्वारगमनाय यात्राचिटिकाम् आनयतु।

**महेशः** – आर्य ! अद्य मया सह बालाचार्यः अपि आगच्छति। आवां ततः शिवाजीनगरं गच्छावः।

**प्रबन्धकः** – अद्य कार्यालयकार्यं नास्ति वा ? कदा आगच्छतः ?

**महेशः** – रात्रौ आगच्छावः।

**प्रबन्धकः** – शिवाजीनगरे कः अस्ति ? बालाचार्यं किमर्थं नयति ?

**महेशः** – शिवाजीनगरे मम भगिनी अस्ति। मम भगिनी बालाचार्यस्यापि बन्धुः। अतः सा उक्तवती–बालाचार्यमपि आनयतु इति। अतः तत्र गच्छावः।

**प्रबन्धकः** – तत्र कोऽपि विशेषः अस्ति किम् ?

**महेशः** – मम आवुत्तस्य किञ्चित् 'अस्वास्थ्यम्' इति। अतः तत्र गत्वा तं दृष्ट्वा आगच्छावः।

**प्रबन्धकः** – भवतु, कार्यविषये चिन्तयताम्। शीघ्रं गत्वा आगच्छताम्।

# परीक्षायै सज्जता

*सप्तमी बहुवचनम्*

शिक्षकः – छात्राः ! परीक्षा सन्निहिता अस्ति। सम्यक् पठन्तु।

अनन्तः – परीक्षा कुत्र प्रचलिष्यति ?

शिक्षकः – सर्वेषु प्रकोष्ठेषु (कक्ष्यासु) क्रमसंख्यां स्थापयामः। परीक्षा अस्माकं विद्यालये एव भविष्यति। इदानीं सर्वे अपि छात्राः बहिः गच्छन्तु।

अनन्तः – किमर्थम् आचार्य ! अद्य एव संख्यां स्थापयन्ति किम् ?

शिक्षकः – इदानीं भवन्तः सर्वेषु प्रकोष्ठेषु स्वच्छतां कुर्वन्तु। उत्पीठिकासु अपि धूलिं मार्जयन्तु। कृष्णफलकेषु अपि धूलिं मार्जयित्वा दिनाङ्कादिकं लिखन्तु।

राजीवः – आचार्य ! सर्वेऽपि कार्यं न कुर्वन्ति। केचन बहिः अटन्ति।

शिक्षकः – बालकेषु एकं प्रमुखं करोमि। बालिकासु एकां प्रमुखां करोमि, यदि क्रीडाङ्गणेषु क्रीडन्ति तर्हि दण्डम् आनयामि। केचन द्रोणीषु जलं पूरयित्वा आनयन्तु।

मालती – मार्जनार्थं वस्त्राणि कुत्र सन्ति ?

शिक्षकः – वस्त्राणि वस्तुसङ्ग्रहप्रकोष्ठे सन्ति। तत्र गत्वा आनयन्तु।

छात्राः – आचार्य ! वयं गच्छामः। सज्जतां कुर्मः।

# कार्यकर्तृगृहम्

*सप्तमी बहुवचनम्*

मालती – अद्य शीघ्रम् आगच्छतु। विजयनगरं गच्छावः।

दिलीपः – विजयनगरे कः विशेषः ?

मालती – अद्य एव खलु सन्ध्यायाः विवाहः ? अतः शीघ्रं गच्छावः।

दिलीपः – अद्य कार्यालये बहुकार्याणि सन्ति। केशवकृपायां मन्थन-कार्यक्रमः। अतः विवाहगमनं न भवेत्।

मालती – भवतः सर्वदा कार्यालये कार्याणि भवन्ति। रविवासरे अपि विरामः नास्ति। कुत्रापि गमनम् एव न भवति।

दिलीपः – मालति ! खेदः मास्तु। कार्यालये १०वादने सीमायाः पाठः अस्ति। अतिथिगृहे दीपव्यवस्था, सभाङ्गणे कार्यक्रमस्य व्यवस्था, कपाटिकायां पुस्तकानां योजनं, ग्रन्थालये आसन्दानां व्यवस्थापनं, पत्रिकां नीता मुद्रणालये द दान तन्मध्ये राजाजिनगरे कार्यकर्तृगोष्ठी-निर्वहणम्-इत्यादीनि कार्याणि सन्ति। अत्र किं कार्यं परित्यजामि।

मालती – अन्ये कार्यकर्तारः न सन्ति वा ?

दिलीपः – सुरेशः लखनऊ गतवान्, नारायणः कोलकतानगरं गतवान्। ते त्रयः शिविरं गच्छन्ति। पुनः के सन्ति ?

मालती – किमपि करोतु।

# यात्रावर्णनम्

*क्तवतु द्विवचन प्रयोगः*

शारदा – किं दर्शनमेव नासीत् भवतोः ?

पङ्कजा – आवां दशदिनानि न आस्व। उत्तरभारतप्रवासार्थं गतवन्तौ। त्वं किं मम गृहं आगतवती आसीत् ?

शारदा – अहं भवत्याः गृहं द्विवारम् आगतवती आसम्। परं भवन्तौ न आस्ताम्। कुत्र कुत्र गतवन्तौ ? किं किं दृष्टवन्तौ ?

पङ्कजा – आवाम् इतः वाराणसीं गत्वा विश्वनाथस्य दर्शनं कृतवन्तौ। वाराणसीतः प्रयागं गतवन्तौ। प्रयागतः मथुरां गतवन्तौ। मथुरातः वृन्दावनं गतवन्तौ।

शारदा – वृन्दावने गिरिजा मिलितवती वा ?

पङ्कजा – आम् ! वृन्दावने गिरिजा मिलितवती। आवां द्वौ अपि तस्याः गृहं गतवन्तौ। सायं अहं गिरिजा च आपणं गतवत्यौ। मम पतिः गिरिजायाः गृहे एव आसीत्। अनन्तरदिने पुनः वृन्दावनतः अयोध्यां गतवन्तौ। तत्र श्रीराममन्दिरं गत्वा पुनः वाराणसीं गतवन्तौ।

शारदा – किमर्थं पुनः वाराणसीं गतवन्तौ ?

पङ्कजा – मम पतिः पुनः विश्वनाथदर्शनं कृत्वा गच्छावः इति उक्तवान्। अतः पुनः वाराणसीं गत्वा आगतवन्तौ।

शारदा – अरे ! महती यात्रा ननु ?

पङ्कजा – आम्, अतः दशदिनेभ्यः गृहे अव्यवस्था। त्वं गमनसमये प्रसादं नय।

# उदरवेदना

*ह्यः/परह्य/श्वः/परश्वः आरभ्य*

रोगी – महाभाग ! महती उदरवेदना अस्ति। किमपि औषधं ददातु।

वैद्यः – उद्वेगः मास्तु। कदा आरभ्य उदरवेदना ?

रोगी – ह्यः आरभ्य उदरवेदना, मुखे रुचिः एव नास्ति।

वैद्यः – ह्यः कुत्र गतवान्, किं किं खादितवान् ?

रोगी – परह्यः मातुलस्य गृहं गतवान्। तत्र सा मधुरं कृतवती। अहं यथेष्टं खादितवान्।

वैद्यः – चिन्ता मास्तु, अहम् औषधं ददामि।

रोगी – किञ्चित् शिरोवेदना अपि अस्ति। बुभुक्षा एव नास्ति। मुखे रुचिः अपि नास्ति।

वैद्यः – भवतः अजीर्णं जातम्। श्वः, परश्वः निमित्तम् औषधं ददामि। प्रपरश्वः पुनः आगच्छतु।

रोगी – श्वः आहारं किं स्वीकरोमि ?

वैद्यः – श्वः परश्वः, प्रपरश्वः घनाहारंवः घनाहारं न अधिकं द्रवाहारं स्वीकरोतु।

रोगी – अस्तु, प्रपरश्वः पुनः आगच्छामि। कति रूप्यकाणि।

वैद्यः – प्रथमवारम् इति ५० रूप्यकाणि ददातु। प्रपरश्वः चेत् २५ रूप्यकाणि एव !

# स्वादिष्टं भोजनम्

*भोजनसम्बन्धिशब्दाः*

पुत्रः – अम्ब ! महती बुभुक्षा भवति। शीघ्रं भोजनं परिवेषयतु।

अम्बा – वत्स ! भोजनार्थं सर्वान् आह्वयतु।

पुत्रः – सर्वे शीघ्रम् आगच्छन्तु।

अम्बा – अद्य ओदनम्, सारः, व्यञ्जनं, क्वथितं, पर्पटः पायसम् च अस्ति।

पुत्रः – अद्य कः विशेषः ?

अम्बा – अद्य रामनवमी भोः। अतः पायसं कृतवती।

भगिनी – अम्ब अद्य व्यञ्जने लवणमेव न योजितवती। लवणं परिवेषयतु।

अम्बा – अहो विस्मृतवती। स्वीकरोतु लवणम्।

पुत्रः – अम्ब ! सारः कटुः अस्ति घृतम् आवश्यकम्।

पतिः – जलजे ! क्वथितं परिवेषयतु। वृन्ताकस्य खलु क्वथितम् अतः खण्डाः मा सन्तु।

अम्बा – वत्स ! पायसं कथमस्ति ?

पुत्रः – पायसं बहु स्वादिष्टम् अस्ति।

भगिनी – पायसं रुचिकरं परं तक्रम् आम्लम् अस्ति। मम अवलेहः आवश्यकः।

पतिः – तथैव जलमपि आवश्यकम्। अद्य व्यञ्जनं कोऽपि न खादति। यतः तत्र लवणमेव नास्ति।

अम्बा – सावधानं भोजनं कुर्वन्तु। किम् आवश्यकम् ?

भगिनी – अद्य भोजनं तावत् सम्यक् नासीत्।

पुत्रः – नहि अम्ब ! भगिनी असत्यं वदति। भोजनम् अतीव स्वादिष्टम् आसीत्।

# आम्रशलाटुकर्त्तनम्

*शक्नोति-शक्नुवन्ति*

**स्वामी** – शिव ! सोम ! राम ! अत्र आगच्छन्तु। एते आम्रशलाटवः आवश्यकाः। कः कर्त्तयितुं शक्नोति ?

**रामः** – अहं तु न शक्नोमि। सोमः, शिवः वा शक्नुयात्।

**सोमः** – अहम् अपि न शक्नोमि। शिवः अपि न शक्नुयात् ?

**स्वामी** – तर्हि तान् वृक्षात् उत्पाटयितुं कः शक्नोति।

**सोमः** – मम गृहपार्श्वे गङ्गारामः इति एकः अस्ति। सः एतादृशकार्ये अतीव चतुरः अस्ति। सः उत्पाटयितुं शक्नुयात्।

**स्वामी** – अहं तु न शक्नोमि, भवन्तः अपि न शक्नुवति। तर्हि तं गङ्गारामं सूचयतु। कः सूचयति ?

**शिवः** – अहं तं सूचयितुं शक्नोमि।

**रामः** – तत्तु निश्चयेन शक्नोति एव।

**स्वामी** – श्वः तत् कार्यं समापयन्तु। सः तु वृक्षात् उत्पाटयति। तान् गृहम् आनेतुं शक्नुवन्ति खलु ?

**सोमः** – तत्तु निश्चयेन शक्नुमः।

**स्वामी** – सोम ! शृण्वन्तु, अहं एकसप्ताहं नगरे न भवामि। अतः किं किं कार्यं समापयितुं शक्नुवन्ति इति चिन्तयन्तु।

# युवकमण्डले सम्मानः

*इव*

| | | |
|---|---|---|
| **सतीशः** | – | किं भोः, मन्त्री इव विलम्बेन आगच्छति ? |
| **देवराजः** | – | क्षम्यताम्, विलम्बः अभवत्। |
| **सतीशः** | – | गजः इव मन्दं चलित्वा आगतवान् वा ? |
| **देवराजः** | – | अहं किं करवाणि ? अहं नगरयानेन आगतवान्। तत्यानं कूर्मः इव मन्दं चलति स्म। |
| **सतीशः** | – | पानीयं किमपि अपेक्षितं वा ? अथवा केवलं जल्पति ? |
| **देवराजः** | – | भवान् कृपणः इव वचनेन एव समापयति वा अथवा किमपि खादितुम्.....। |
| **सतीशः** | – | किं रे बकासुरः इव सदा खादितुम् इति वदति। भवतु, आगमनकारणं निवेदयतु। अम्ब ! देवराजः आगतवान्। खाद्यम् आनयतु...। |
| **देवराजः** | – | अस्माकं स्नेहितः वादिराजः अस्ति खलु। सः कालिदासः इव काव्यं लिखति। शारुहखान इव अभिनयति। हरिवंशराय बच्चनः इव लेखं लिखति। नरेन्द्रकोहली इव उपन्यासं लिखति। एवं बहु प्रसिद्ध अस्ति इति। |
| **सतीशः** | – | तर्हि किं कुर्मः इति वदति। |
| **देवराजः** | – | तम् अस्माकं युवकमण्डले सम्मानयामः किम् ? |
| **सतीशः** | – | युवकमण्डले चर्चयामः अन्ये अङ्गीकुर्वन्ति चेत् ममापि अङ्गीकारः एव। भवान् तस्य विषयम् उपस्थापयतु। |
| **देवराजः** | – | अस्तु। तर्हि श्वः मेलिष्यामि। |

# क्षम्यताम्

इति

| | | |
|---|---|---|
| अग्रजा | – | हो, हो भवान् वा ? आगच्छतु, आगच्छतु। |
| रविः | – | आम् अहमेव। मां कः ? इति चिन्तितवती भवती ? |
| अग्रजा | – | भवन्तं एकः महामार्जारः इति चिन्तिवती। निःशब्दं, अकस्मात् भवान् आगतवान् खलु ? |
| रविः | – | असत्यं मा वदतु भवती मां महाचोरः इति, अपरिचितः दृष्टः, इति, चिन्तितवती ननु ? |
| अग्रजा | – | नैव, भवन्तं महाव्याघ्रः इति चिन्तितवती। |
| रविः | – | भोः तदर्थं कोपः मास्तु। अहमपि विनोदं कृतवान्। भवतु, सद्यः मां भवत्याः प्रियानुजः इति चिन्तयतु। |
| अग्रजा | – | एवं विनोदशीलः इत्येव मम गृहे भवान् बहुप्रियः अभवत् परं भवतः अहङ्कारः, गर्वः,... |
| रविः | – | अग्रजे ! अद्य भवत्याः किम् अभवत् इति। पदे पदे कुपिता भवति खलु ? |
| अग्रजा | – | सत्यं भोः। अग्रजा इति, आवुत्तः इति वा भवतः प्रीतिः अस्ति वा ? एकं पत्रं लिखितवान् किम् ? अन्ततोगत्वा एकां दूरवाणीं...? |
| रविः | – | क्षम्यताम्.....क्षम्यताम्...... पादयोः पतामि। आवुत्तः कदा आगच्छति? भवती एव मां रक्षतु। भवतीं शरणं गच्छामि। |

# मित्रसाहाय्यम्

तुमुन्/क्तवतु

**नवीनः** – तपनः आगतवान् आसीत्। श्वः प्रातःकाले आगमिष्यामि इति उक्त्वा गतवान्।

**भास्करः** – भवान् उपविशतु इति न उक्तवान् किम् ?

**नवीनः** – अहम् उक्तवान् तथापि सः गतवान्। तस्य मुखे खेदः आसीत्।

**भास्करः** – सः एकम् उद्योगं प्राप्तुम् इच्छति। किन्तु तत्रत्य अधिकारी उत्कोचम् इच्छति। एषः तपनः कथं धनं दातुं शक्नोति ?

**नवीनः** – अतः एव मां किमपि न उक्तवान्। भवान् नास्ति इति श्रुत्वा तथैव निर्गतवान्।

**भास्करः** – अहं श्वः अपि प्रातः एव गमिष्यामि। सः आगच्छति चेत् एतत् धनं ददातु। अनन्तरं दूरवाणीं कर्तुं वदतु।

**नवीनः** – तपनः गृहे प्रष्टुं न शक्नोति वा ?

**भास्करः** – तपनस्य गृहे अपि तावद् धनं दातुं समर्थाः न। तेषां मध्यमस्तरीय-कुटुम्बः। तिस्रः भगिन्यः अपि सन्ति। एषः एकः एव पुत्रः। कुटुम्बपोषणमपि कष्टमेव।

**नवीनः** – तपनस्य भवतः च कथं परिचयः।

**भास्करः** – तपनस्य पिता, मम पिता च स्नेहितौ। अहमपि तयोः स्नेहसम्बन्धं रक्षितुम् इच्छामि। तपनः अतीव विधेयः युवकः, गुणी च।

# परिचयपाठः

*षष्ठी-भवत्यः, भवत्याः, मम*

**आचार्यः** – सर्वेभ्यः स्वागतम्। नमस्काराः। मम नाम शम्भुनाथः। भवतः नाम किम् ?

**श्रीधरः** – मम नाम श्रीधरः।

**आचार्यः** – भवत्याः नाम किम् ?

**पूनम** – मम नाम पूनम्।

**आचार्यः** – अरविन्द ! भवतः जनकस्य नाम किम् ?

**अरविन्द** – मम जनकस्य नाम गिरीशः।

**आचार्यः** – श्रीधर ! अत्र आगच्छतु ! अहं भवतः नासिका इति वदामि। भवान् मम नासिका इति वदतु। भोः छात्राः भवन्तः श्रीधरस्य नासिका इति वदन्तु।

**आचार्यः** – भवतः कर्णः

**श्रीधरः** – मम कर्णः

**छात्राः** – श्रीधरस्य कर्णः

**आचार्यः** – भवतः, पादः भवतः हस्तः, भवतः शिरः, भवतः वदनम्... इत्यादि।

**श्रीधरः** – मम पादः, मम हस्तः..... मम शिरः, ..... मम वदनम्....।

**आचार्यः** – श्रीधरस्य पादः, श्रीधरस्य हस्तः श्रीधरस्य शिरः, श्रीधरस्य वदनम्.....।

**आचार्यः** – भवत्याः पुस्तकम्..... एवमेव।

**लता** – मम पुस्तकम्।

**छात्राः** – लतायाः पुस्तकम् लतायाः लेखनी...।

आचार्यः – भगिनी-गृहम् इति वदामि, परिष्कारं कुर्वन्तु।

छात्राः – भगिन्याः गृहम्।

आचार्यः – गृहं-चित्रम् इति वदामि।

छात्राः – गृहस्य चित्रम्।

आचार्यः – अहम् उत्तराणि वदामि-भवन्तः प्रश्नान् वदन्तु।

आचार्यः – मम नाम गिरीशः।

छात्राः – भवतः नाम गिरीशः।

आचार्यः – पुस्तकस्य नाम बालसरिता।

छात्राः – पुस्तकस्य नाम किम् ?

आचार्यः – श्वः पुनः एतस्य पाठं कुर्मः।

# क्रीडा अपि आवश्यकी

*लृट्/सम्बोधनम्*

**माता** – पुत्र ! भवान् एवं सदा क्रीडति चेत् उत्तीर्णः न भविष्यति। ज्ञानमपि न प्राप्स्यति।

**अमरः** – अम्ब ! किमर्थं तथा वदति ? अहं केवलं न क्रीडिष्यामि। अनन्तरं पठिष्यामि।

**माता** – गृहसदस्याः सर्वे वदन्ति यत् भवान् सर्वदा क्रीडति। न पठिष्यति इति।

**अमरः** – अहं सर्वदा क्रीडामि। किन्तु कदापि अनुत्तीर्णः न भविष्यामि। भवत्याः चिन्ता मास्तु। पश्यतु गतमासस्य परीक्षफलितांशम्।

**माता** – वत्स ! एतत् अङ्कपत्रं भवतः एव वा ?

**अमरः** – सत्यम् अम्ब ! भवत्याः मयि विश्वासः नास्ति यतः सर्वदा अहं क्रीडिष्यामि इति ननु। कक्ष्यायाम् अहमेव प्रथमं स्थानं प्राप्तवान्।

**माता** – अस्तु, इतः परं भवान् क्रीडतु। अहं चिन्तां न करिष्यामि एव।

**अमरः** – अम्ब ! मम शिक्षकः वदति। जीवने पठनमेव प्रधानं न, क्रीडा अपि तदा तदा आवश्यकी। क्रीडति चेत् शक्तिवर्धनं भविष्यति, सदा मनः उल्लसितं भविष्यति। बुद्धिविकासः भविष्यति। अतः क्रीडा अपि प्रधाना इति।

**माता** – भवतु पुत्र ! भवान् उत्तमः भवतु इत्येव मम आशयः।

# मातुलः आगमिष्यति

*अव्ययानि*

| | | |
|---|---|---|
| **पुत्री** | – | अम्ब ! अम्ब ! मातुलः नागपुरतः आगच्छति। |
| **अम्बा** | – | वत्से ! मातुलस्य आगमनं कः सूचितवान् ? |
| **पुत्री** | – | अम्ब ! तातः उक्तवान्–अद्य मातुलः आगच्छति इति। मातुलः आगच्छति चेत् किं किं करोति ? |
| **अम्बा** | – | प्रथमं सः आगच्छतु। अनन्तरं किमपि करोमि। |
| **पुत्री** | – | तातः असत्यं वदति वा ? किमर्थम् एवं वदति भवती ? |
| **अम्बा** | – | नैव वत्से ! तातः असत्यं न वदति। किन्तु भवत्याः मातुलः उक्ते दिने नागच्छति। अतः तथा उक्तवती। |
| **पुत्री** | – | अद्य मातुलः नागच्छति चेत् पुनः कदापि तेन सह सम्भाषणं न करोमि। |
| **अम्बा** | – | किमर्थं पुत्री तावती निरीक्षा वा ? पश्यतु, बहिः तातेन सह कोऽपि सम्भाषणं करोति। |
| **पुत्री** | – | अम्ब ! मातुलः आगतवान्। माम ! आगच्छतु मम क्रीडासाधनानि दर्शयामि। कति वर्षाणि अभवन्। किम् अस्माकं स्मरणं न भविष्यति ? |
| **पिता** | – | वत्से ! किम् एकेन श्वासेन एव सर्वं वदति ? प्रथमं मातुलाय पानीयं ददातु। |
| **अम्बा** | – | अहो ! अद्य पूर्वदिशि सूर्योदयः जातः किम्। |
| **मातुलः** | – | सूर्योदय पूर्वदिशि एव। दिवाकरः तु भवतां पुरतः उपस्थितः। |

# निश्चिन्ता भविष्यामि

*द्विवचन प्रयोगाः*

शालिनी – लतिके ! किं करोति गृहे। भवती तु सदा कार्ये मग्ना भवति।

लतिका – किं करोमि। गृहिण्याः विरामः नास्ति खलु ?

शालिनी – वदतु किं वक्तुम् इच्छति। अद्य कार्यालयस्य विरामः वा ?

लतिका – अतः एव एवम् आगतवती भवत्याः पुत्रः कथं पठति।

शालिनी – मम पुत्रः सम्यक् एव पठति। अहं तु तं पाठयामि। स्वयमेव पठति। तं पठतु इत्यपि न वदामि।

लतिका – अहो ! भाग्यशालिनी भवति ! मम पुत्रौ तु न पठतः एव। निरन्तरं क्रीडतः, अहं तु दिने न भवामि। तयोः पाठने मम समयोऽपि नास्ति। ह्यः तयोः शिक्षिका भवतां पुत्रौ अध्ययने रुचिं न दर्शयतः गृहे भवन्तः एतद्विषये समुचितं चिन्तयन्तु पठने रुचिं तयोः उत्पादयन्तु इति पत्रं प्रेषितवती- किं करोमि इति महती चिन्ता।

शालिनी – लतिके ! चिन्तां न करोतु। भवत्याः पुत्रयो विषये अहम् उपायं वदामि।

लतिका – कः उपायः ? शीघ्रं वदतु।

शालिनी – भवती धनं दातुं सिद्धा अस्ति चेत् तौ प्रेषयतु। मम प्रतिवेशिनी उत्तमं पाठयति। परं.....

लतिका – परं.... किम् ?

शालिनी – सा प्रतिमासं पाठार्थं एकस्य कृते २०० रूप्यकाणि स्वीकरोति। ये प्रथमस्थानं प्राप्नुवन्ति ते एव अधिकतया तत्र गच्छन्ति।

लतिका – धनविषये चिन्ता नास्ति। सा अङ्गीकरोति चेत् अद्य आरभ्य एव प्रेषयामि।

शालिनी – अस्तु। अहं तया सह भाषणं करिष्यामि भवतीं सूचयिष्यामि।

लतिका – धन्यवादः। अहं मम पुत्रयोः पठनविषये निश्चिन्ता भविष्यामि।

# सः वा ?

*कः/खलु/क्तवतु*

पत्नी – भवान् कदा आगतवान् ?

पतिः – किमर्थं भोः तथा पृच्छति। इदानीमेव आगतवान्।

पत्नी – रविशङ्करः आगतवान् आसीत्।

पतिः – कः सः रविशङ्करः ?

पत्नी – सः भवन्तं जानाति इति।

पतिः – कः सः, न स्मरामि खलु ?

पत्नी – विशालनेत्रः, द्रष्टुं सुन्दरः, उन्नतोऽपि, श्वेतवर्णीयः। भवतः विषये बहु-बहु श्लाघितवान्। तेन सह तौ द्वौ विदूषकौ इव स्तः खलु ? तौ अपि आगतवन्तौ। ते सर्वेऽपि भवन्तं बहु प्रशंसितवन्तः।

पतिः – तर्हि कः भोः तादृशः। तस्य नाम 'रविशङ्कर' इति सः एव उक्तवान् वा ? अथवा....भवती चिन्तितवती वा ? अन्यत् किम् उक्तवान् ।

पत्नी – तावदपि न जानामि वा ? अहं यत् वदामि तस्य सदा उपहासं करोति भवान् । सः कविसम्मेलने मिलितवान् इति। तत्र भवतः सन्दर्शनमपि दूरदर्शने आयोजयामि इति उक्तवान् इति। अतः दिनाङ्कं निश्चेतुम् आगतवान् आसीत्।

पतिः – सः वा ?

पत्नी – किमर्थं हसति भोः। इदानीं वा ज्ञातवान् खलु।

पतिः – सः रविशङ्करः न भोः उमाशङ्करः। बहुकथकः, कार्यमेकमपि न साधयति।

पत्नी – रविशङ्करो वा, उमाशङ्करो वा कोऽपि शङ्करः एव खलु।

पतिः – अस्तु। अहं तेन सह वार्तां करिष्यामि।

# लोकहितं करोतु

*स्मप्रयोगः*

विनुता – रामलालस्य पत्नी मृता इति। भवती जानाति वा ?

सुमेधा – कदा भोः। तस्याः किम् अभवत् ?

विनुता – ह्यः सायङ्काले मृतवती। तस्याः द्विनद्वयतः ज्वरः आसीत् इति। ह्यः प्रातः आरभ्य हृदयवेदना इति वदति स्म। प्रायः तस्याः पतिः अपि गृहे नासीत् इति।

सुमेधा – अहो कष्टम्.....। सा जलजा तु सम्यक् गायति स्म। बालान् अपि प्रीत्या पाठयति स्म। सर्वदा सौहार्देन व्यवहारं करोति स्म। एवं..... न भवेत् भोः.....

विनुता – किं कर्तुं शक्नुमः। सर्वं दैवलीला.....। ललाटलिखिता रेखा। जलजायाः समीपे कति विद्यार्थिनः पठन्ति स्म।

सुमेधा – जलजायाः समीपे चत्वारिंशत् बालिकाः गच्छन्ति स्म। सा ताः सुमधुरं, सुललितं च पाठयति स्म। तथापि शुल्कम् अधिकं न स्वीकरोति स्म।

विनुता – तादृशाः जनाः इदानीं विरलाः भोः। किञ्चित् किमपि पाठयित्वा अत्यधिकं स्वीकुर्वन्ति।

सुमेधा – अतः एव सा अधिकां वेदनां विना अनायासं मरणं प्राप्तवती स्यात्।

विनुता – सत्यम्। अतः एव वदन्ति–'यावत् जीवति तावत् सुकार्यं करोतु' इति।

# मित्रयोः सम्भाषणम्

*अपेक्षया*

**प्रकाशः** – मुकुन्द ! पठनं कथं प्रचलति ? कति विषयान् समापितवान्?

**मुकुन्दः** – ह्यः द्वौ विषयौ समापितवान्। भवतः अपेक्षया मम पठनं न्यूनम् एव। पठने तावती आसक्तिः नास्ति मम। पठनस्य अपेक्षया अधिकं लिखामि यतः स्मरणे तिष्ठति खलु ?

**प्रकाशः** – मम गृहं ह्यः बान्धवाः आगतवन्तः। अतः अध्ययनस्य अपेक्षया जल्पनम् अधिकम् अभवत्।

**मुकुन्दः** – इतिहासशिक्षकस्य अपेक्षया गणितशिक्षकम् अहम् इच्छामि। तस्य पाठनशैली सर्वेषाम् अपेक्षया उत्तमा।

**प्रकाशः** – भवतां शिक्षकस्य अपेक्षया संस्कृतशिक्षिका रोचकतया पाठयति। वयं तु तस्याः पाठनस्य निरीक्षां कुर्मः।

**मुकुन्दः** – परं मुख्योपाध्यायः तु सर्वेषां अधिकम् उत्साहं, प्रेरणाञ्च पूरयति। केवलम् अध्ययनस्य अपेक्षया अन्येषु विषयेषु अपि प्रोत्साहं ददाति। अतः एव अन्येषां विद्यालयानाम् अपेक्षया अस्माकं विद्यालयः अत्युत्तमः, आदर्शभूतः च अस्ति।

# जनभाषा संस्कृतम्

तुमुन्/शक्नोति

**पत्रकारः** – संस्कृतभाषां जनभाषां कर्तुं भवन्तः प्रयत्नं कुर्वन्ति। एतेन फलं दृष्टवन्तः वा भवन्तः ?

**प्रबन्धकः** – निश्चयेन एतस्य फलं सिद्धमेव। सर्वदा संस्कृतभाषया वक्तुम् अनेके इच्छन्ति। संस्कृतसरलम् इति जनाः जानन्ति। देशे संस्कृतं पठितुम् उत्साहं दर्शयन्ति। सर्वत्र जनानां संस्कृतोन्मुखता, संस्कृतस्य आदरः अधिक दृश्यते।

**पत्रकारः** – संस्कृत-आन्दोलनेन इतोऽपि किं सफलं जातम् ?

**प्रबन्धकः** – संस्कृतेन व्यवह्रियमाणानां संख्या अधिकाजाता। संस्कृतमेव मातृभाषा अस्ति तादृशाः बालाः सन्ति। संस्कृते इतोऽपि अधिकानि नवीनानि साहित्यानि अपि मुद्रितानि। संस्कृतज्ञाः अपि कार्ये आधिक्येन प्रवृत्ताः।

**पत्रकारः** – संस्कृतं वयं दशदिनेषु पाठयामः इति भवन्तः वदन्ति तत् शक्यते वा ?

**प्रबन्धकः** – वयं दशदिनेषु एव संस्कृतपण्डितं न कुर्मः। तेषु संस्कृतोन्मुखतां जनयामः। ते अनन्तरं शास्त्रपर्यन्तमपि पठन्ति।

**पत्रकारः** – भवतु, भवतां कार्यं यशस्वी भवतु। एतस्य प्रचारार्थं वयमपि तदा तदा प्रसारयामः। तेन अनेके जनाः अत्र सम्पर्कं कर्तुं शक्नुवन्ति।

# कार्यक्रमः

*करोतेः - प्रयोगः*

प्रमुखः – अद्य कार्यक्रमः कथं भोः। कः कः किं किं करोति इति वदतु।

विशालः – आगच्छतु वदामि।

छात्राः – नमस्कारः श्रीमन् ।

विशालः – नमस्कारः। उपविशन्तु। एषा मधुरा, एषा अद्य प्रार्थनां गायति। एतस्याः माता वीणां वादयति।

प्रमुखः – कार्यक्रमस्य निर्वहणं कः करोति...?

विशालः – कार्यक्रमस्य निर्वहणं विशालः करोति। एषः पञ्चमकक्ष्यायां पठति। स्वानुभवं पद्मश्री वदति। सा एतस्याः कक्ष्यायाः प्रमुखा। प्रास्ताविकं भवान् वदतु।

प्रमुखः – किं वदामि भोः......। अस्तु चिन्तयामि। भवान् अपि सिद्धः भवतु।

विशालः – एतौ द्वौ दूरवाणी-सम्भाषणं कुरुतः। एते द्वे बालिके विज्ञापिकां कुरुतः। सः राजेशः एकपात्राभिनयं करोति। तौ किं कुरुतः इति न जानामि।

प्रमुखः – पृच्छतु भोः भवन्तौ किं कुरुतः ?

वीरकः – आवां एकं ऐन्द्रजालं प्रदर्शयावः।

नन्दीश – मम मित्रं वन्दनार्पणं करोति।

प्रमुखः – भवतु। सर्वे मिलित्वा कार्यक्रमस्य यशस्विता यथा स्यात् तथा कुर्वन्तु।

# माता-पुत्रयोः सम्भाषणम्-II

क्त्वा

| | | |
|---|---|---|
| माता | – | प्रदीप ! दुग्धं पीतवान् वा ? |
| पुत्रः | – | नैव अम्ब ! तत्रैव अस्ति दुग्धम्। |
| माता | – | तर्हि दुग्धं पीत्वा पठतु। तातः स्नानं कृत्वा उपाहारं स्वीकरोति। तावता भवतः स्थानार्थम् अपि जलम् उष्णं भवति। |
| पुत्रः | – | तथैव करोमि अम्ब ! तातः शीघ्रं स्नानं कृत्वा कुत्र गच्छति ? |
| माता | – | अद्य रामनगरे सङ्गीत-कार्यक्रमः अस्ति इति। अतः तातः शीघ्रं स्नात्वा, पूजां कृत्वा, उपाहारं खादित्वा कार्यक्रमार्थं गच्छति इति। |
| पुत्रः | – | अम्ब ! अहमपि विद्यालयतः सायं विलम्बेन आगच्छामि। मित्रस्य जन्मदिनोत्सवः अस्ति। अतः विद्यालयतः मित्रस्य गृहं गत्वा, क्रीडित्वा, नृत्याभ्यासकक्ष्यामपि गत्वा गृहम् आगच्छामि। |
| माता | – | तर्हि अहमपि देवालयं गत्वा, सखीं मिलित्वा, सम्भाषणं कृत्वा आगच्छामि। |

